श्रीः।

# राजमार्त्तण्डः।

महाराजाधिराजश्रीभोजराजविरचितः।

पण्डितवरभवानीदत्तजी शास्त्रि ज्यौतिषि-
कसकाशलब्धपुस्तकः।

सोऽयं

खेमराज श्रीकृष्णदासेन

मुम्बय्यां

स्वकीये "श्रीवेंकटेश्वर" मुद्रणालये

मुद्रयित्वा प्रकाशिता।



सम्वत् १९५३, शके १८१८.

श्रीः ।

अथ

# राजमार्तण्डस्थविषयानुक्रमणिका प्रारंभः ।

| क्रमाङ्काः विषयाः | पृष्ठाङ्काः |
|---|---|

॥ इत्यनुक्रमणिका समाप्ता ॥

श्रीः।

# अथ राजमार्तण्डः प्रारभ्यते।

श्रीगणेशाय नमः ॥ यच्छास्त्रं सविता चकार विपुलं स्कंधैस्त्रिभिर्ज्योतिषं तस्योच्छित्तिभयात्पुनः कलियुगे संसृत्ययो भूतलम् ॥ भूयः स्वल्पतरं वराहमिहिरो व्याख्यां तु सर्वां व्यधादित्थं यत्प्रवदंति योगकुशलास्तस्मै नमो भास्वते ॥ १ ॥ पूर्वाचार्य्यमतेभ्यो यद्यच्छ्रेष्ठं लघु स्फुटं बीजम् ॥ तद्बुद्धिदं शुभकरं रहस्यमभ्युद्यते वक्तुम् ॥ २ ॥ वैद्यः पुरोहितो मंत्री देवज्ञश्च चतुर्थकः ॥ प्रातःकालेषु द्रष्टव्या नित्यं स्वश्रेय इच्छता ॥ ३ ॥ पुरोधा गणको मंत्री वैद्यश्चापि चतुर्थकः॥एते राज्ञा सदा पोष्याः कृच्छ्रेणापि स्त्रियो यथा ॥ ४ ॥ गतश्रीर्गणकान्द्वेष्टि गतायुश्च चिकित्सकान् ॥ गतश्रीश्च गतायुश्च ब्राह्मणान्द्वेष्टि भारत ॥ ५ ॥ देवता यत्र पूज्यंते सांवत्सरपुरोहिताः ॥ गुरवो ग्रहनक्षत्रं तत्रायुर्भूतिलक्षणम् ॥ ६ ॥ यात्राविवाहसमयव्रतदानहोमशक्त्यादिपुंसवनजन्मगृहार्थकाले ॥ यः पूजयेद्ग्रहगणं गणकावकीर्णं लक्ष्मीं क्रियाफलमिदं लभते मनुष्यः ॥ ७ ॥ आदित्यः सविता सूर्यो भास्करोऽर्को दिवाकरः ॥ तिग्मांशुस्तपनो भानुः सहस्रांशुः प्रभाकरः ॥ ८ ॥ शीतांशुश्चंद्रमाः सोमो मृगांकस्तु

निशाकरः ॥ शीतरश्मिर्निशानाथः शशांकः शशलांछनः ॥ ९ ॥ अंगारकः कुजो भौमो लोहितांगो महीसुतः ॥ आरः क्षितिसुतो वक्रः क्रूराक्षश्च निगद्यते ॥ ॥ १० ॥ बुधश्चंद्रसुतो ज्ञेयो विबुधो बोधनस्तथा ॥ कुमारो राजपुत्रश्च तारापुत्रस्तथैव च ॥ ११ ॥ सुरमंत्री सुराचार्य्यो गुरुर्जीवो बृहस्पतिः ॥ अंगिरोंशःस्मृतस्तज्ज्ञैर्गिरीशो वचसांपतिः ॥ १२ ॥ भृगुजो दैत्यमंत्री च दैत्याध्यक्षः पुरोहितः ॥ उशना भार्गवः काव्यः शुक्रो दैत्यगुरुस्तथा ॥ १३ ॥ सौरिः शनैश्वरः पंगुः कोणः सूर्य्यसुतस्तथा ॥ मंदःशनिश्च मातंगी च्छायापुत्रोऽसितांबरः ॥ ॥ १४ ॥ उपप्लवस्तमो राहुः सुरारिः सिंहिकासुतः ॥ केतुर्ब्रह्मसुतो ज्ञेयो धूम्रवर्णः शिखी तथा ॥ १५ ॥ ॥ इति ग्रहाभिधानानि॥ अश्विनी तुरगो वाजी तुरंगश्च तुरंगमः ॥ घोटकोऽश्वो हयो वाहो दस्रो युज्यं निगद्यते ॥ १६ ॥ यमोंऽतकः कृतांतश्च याम्यः प्रेतपतिः स्मृतः ॥ भरणी पलभादेशो मत्स्योदाधिपतिस्तथा ॥ १७॥ बहुलो दहनो वह्निः पावकोऽग्निर्हुताशनः ॥ हुतभुक्कनलोऽर्चिष्मान्रोहितश्चैव कृत्तिका ॥ ॥ १८ ॥ रोहिणी पद्मयोनिश्च ब्रह्मा कमलसंभवः ॥ पितामहोऽब्जजो धाता विरिंचिश्च प्रजापतिः॥ १९ ॥ चतुर्मुखश्चतुर्वक्त्रः स्रष्टा पद्मासनस्तथा ॥ आत्मभूः परमेष्ठी च सुरज्येष्ठोऽमराग्रजः ॥ २० ॥ सौम्यो मृगशिराः सोमो निशानाथो निशापतिः ॥ मृगांकः शीतरश्मिश्च रात्रीशो

रजनीपतिः ॥ २१ ॥ चंद्रमा हिमरश्मिश्च शीतांशुर्हिमदीधितिः ॥ इंदुर्निशाकरश्चंद्रः शशी च रोहिणीपतिः ॥ २२ ॥ आर्द्रा रौद्रः शिवः शूली शंकरश्चंद्रशेखरः ॥ सोमभृत्र्यंबको भर्गश्चंडीशो गिरिजापतिः॥ २३ ॥महेश्वरो महादेवः पार्वतीपतिरीश्वरः ॥ श्रीकंठो नीलकंठश्च गोपतिर्वृषवाहनः ॥ ॥ २४ ॥ अदितिर्देवमाता च स्मृता पुनर्वसुर्बुधैः ॥ गुरुः पुष्यः सुरज्येष्ठो देवमंत्री कविः स्मृतः ॥ २५ ॥ बृहस्पतिः सुराचार्य्यो वागीशश्च सुरार्चितः ॥ वाक्पतिः सुरपूज्योऽपि सुरेज्यस्त्रिदशार्चितः ॥ २६ ॥ आश्लेषा भुजगः सर्पो दंदशूको भुजंगमः ॥ चक्षुःश्रवाः फणी नागो भुजंगः फणभृत्तथा ॥ २७ ॥ उरगोऽहिर्विषाग्निश्च विषधारोऽथ पन्नगः ॥ पितृदेवो मघा नित्यं भगाख्यः पूर्वफाल्गुनी॥ २८॥ उपस्थो मेढ्रसंस्थानो योनिः शेफः सुखप्रदः ॥ गर्भनिर्गमनद्वारं गर्भपंथाः स्मृतो बुधैः ॥ २९ ॥ ज्ञात्वैवमन्यदप्यूह्यमर्य्यमोत्तरफाल्गुनी ॥ हस्तोऽर्कः सविता सूर्य्यः प्रचंडरुचिरुष्णगुः ॥ ३० ॥ तरणिस्तपनो भानुर्दिननाथस्तिथीश्वरः ॥ दिवाकरः सरांशुश्च मार्तंडो मिहिरो रविः ॥ ३१ ॥ सप्तसप्तिः स्मृतो भास्वानादित्यो ब्रह्म एव च ॥ निशांतको निशारिः स्याद्दिनेशो ध्वांतनाशनः ॥ ३२ ॥ त्वाष्ट्रश्चित्राथ वातास्या स्वाती परमदैवतम् ॥ समीरः श्वसनो वायुर्मारुतोऽथ समीरणः ॥ ॥ ३३ ॥ इंद्राग्निश्चापि शक्राग्निर्विशाखा च निगद्यते ॥

अनुराधा स्मृतो मैत्रो वैशाखस्यानुजः स्मृतः ॥ ३४ ॥ ज्येष्ठा सुराधिपः शक्रः पुरुहूतोऽमराधिपः॥इंद्रः पुरंदरः प्रोक्तः सहस्राक्षोऽथ वासवः ॥ ३५ ॥ राक्षसो निर्ऋतिर्मूलं पूर्वापाढा जलाह्वयः ॥ विश्वे चाप्युत्तरापाढा वैश्वदेवश्च कथ्यते ॥ ३६ ॥ श्रवणो माधवो विष्णुरच्युतः केशवो हरिः ॥ श्रीधरो दानवारिश्च धनिष्ठा च धनं वसुः ॥ ३७ ॥ वरुणो वारुणः ख्यातः शतभिषा त्वंबुराड् भवेत् ॥ अजैकपात्स्मृतो नित्यं पूर्वाभाद्रपदा बुधैः ॥ ३८ ॥ स्यादुत्तराभाद्रपदस्त्वहिर्बुध्न्यश्च कथ्यते ॥ अंत्यभं रेवती पौष्णं पूषा चेतीव नामतः ॥ ३९ ॥ एता नक्षत्रजाः संज्ञा यत्नेनोक्ता मया स्फुटम्॥हिताय मंदबुद्धीनामन्या ज्ञेयान्यशास्त्रतः ॥ ४० ॥ इतिनक्षत्रसंज्ञा॥अश्वीयमदहनकमलजशशिशूलभृददितिजीवफणिपितरः ॥ योन्यर्यमदिनकृत्त्वष्टृपवनशक्राग्निमित्राश्च ॥ ॥ ४१॥ शक्रो निर्ऋतिस्तोयं विश्वेदेवहरिर्द्रविणवरुणाः ॥ अजपादोहिर्बुध्न्योश्वीतीश्वरा भानाम् ॥ ४२ ॥ अजो मेपः क्रियश्चापि वृषभश्च धुरंधरः ॥ उक्षा गौर्गोपतिश्चापि मिथुनं नृयुगं तथा ॥ ४३ ॥ कुलीरः कर्कटोऽब्जश्च सिंहो लेयो हरिःस्मृतः॥स्यात्पोतगा चपाथेयः ससत्या युवती तथा ॥ ४४ ॥ कन्या कुमारिका ज्ञेया पष्ठी शशीस्मृताबुधैः॥ तुला मूको धटस्तौलिर्वणिजाख्यस्तुलाधरः ॥ ४५ ॥ कौर्प्याख्यो वृश्चिकः कीटो बुधैस्त्वालिर्निगद्यते ॥ अस्त्रं धनुश्च कोदंडधरश्चापश्च तौक्षिकः ॥ ४६ ॥ आकः केरो मृग-

श्चापि मृगास्यो मकरस्तथा ॥ हृद्रोगोऽथ घटः कुंभो मीन-श्चानिमिषो झषः ॥४७॥ इति राशिसंज्ञाः ॥ अश्विन्योऽथ भरण्यो बहुलापादश्च कीर्त्तितो मेषः ॥ वृषभो बहुलाशेषं रोहिण्यर्द्धं च मृगशिरसः ॥ ४८ ॥ मृगशिरसोऽर्द्धं रौद्रं पुनर्वसोश्चांशकास्त्रयो मिथुनम् ॥ पादश्च पुनर्वसुतः पुष्योऽश्लेषा च कर्कटकः ॥ ४९ ॥ सिंहोऽथ मघा पूर्वा फाल्गुनीपादमुत्तरायाश्च ॥ तत्परिशेषं हस्तश्चित्रार्द्धं च कन्याख्यः ॥ ॥ ५० ॥ तौलिनि चित्रांत्यार्द्धं स्वात्याः पादत्रयं विशाखायाः ॥ अलिनि विशाखापादस्तथाऽनुराधान्विता ज्येष्ठा ॥ ॥ ५१ ॥ मूलमषाढापूर्वा प्रथमश्चाप्युत्तरांशको धन्वी ॥ मकरस्तत्परिशेषं श्रवणः पूर्वं धनिष्ठार्द्धम् ॥ ५२ ॥ कुंभोंत्यधनिष्ठार्द्धं शतभिषगंशत्रयं च पूर्वायाः ॥भाद्रपदायाःपादस्तथोत्तरारेवतीमीनः ॥५३ ॥इतिराशिनक्षत्रव्यवस्था॥ कुजभृगुबुधचंद्रार्कज्ञसितावनिजगुरुसौरिशनिजीवाः ॥क्रमशोमेषादीनां भानां पतयः परिज्ञेयाः ॥ ५४ ॥ स्त्रीणां पुंसवनं यात्राभूषणाच्छादनादिकम्॥सर्वस्वामिविशुद्धौ च कर्त्तव्यमविकल्पतः ॥५५॥स्त्रीणां सर्वक्रियारंभे भर्तुर्गोचरतः फलम्॥ स्वशुद्ध्या गर्भशुद्ध्या च गर्भाधानादिकं मनुः ॥५६॥ स्त्रीणां सर्वक्रियाः कार्या विशुद्ध्या स्वामिनः सदा॥स्वशुद्ध्या स्वामिशुद्ध्या च गर्भाधानादिकाः क्रियाः ॥ ५७ ॥ विवाहकार्यं कुसुमप्रतिष्ठा गर्भप्रतिष्ठा वनिताविशुद्धौ॥ अन्यानि कार्य्याणि धवस्य शुद्धौ पत्यौ विहीने प्रमदात्मशुद्ध्या ॥ ५८ ॥ विशुद्धौ योषितां रा-

शौ गर्गहारीतगौतमाः ॥ शुभं पुंसवनं यात्रामुद्वाहकरणं जगुः॥ ॥ ५९ ॥ स्त्रीणां शुद्धिमशुद्धिं नक्षत्रं वासरादिकं सर्वम् ॥ पुंसवने परिणयने सम्यक्परिकीर्तितं मुनिभिः ॥ ६० ॥ यात्रा युवतिविशुद्ध्या युवतिविशुद्ध्या वदंति पुंसवनम्॥युवतिविशुद्ध्योद्वाहं गौतमयवनादयो मुनयः॥६१॥ स्त्रीणां विशुद्ध्योद्वहनं प्रयाणं सीमंतकर्माणि शुभप्रदानि॥ विशेषतः केशकलापबंधः प्रशस्त इत्येव वदंति संतः ॥६२॥ उक्तानि प्रतिपिद्धानि पुरा संभावितानि च ॥ सापेक्षनिरपेक्षाणि स्मृतिवाक्यानि कोविदैः ॥६३॥ इति स्त्रीणां शुद्धिचिंता ॥ पुष्पस्नानौषधयोर्याः कथितास्ताभिरंबुसहिताभिः॥ स्नायाच्चतुर्थदिवसे शास्त्रोक्तेनोपदेशेन ॥६४ ॥ फलिनीमूलकनकांबुजजातीलामज्जकोपेतैः ॥ स्नायादभिनवकुसुमा पुष्पैर्नानाविधैर्बहुभिः ॥ ६५ ॥ सुतसौभाग्यविशुद्ध्यै एलाघनचंदनोशीरैः ॥ न च पुष्पवती युवती चोद्वर्त्य निशात्यये स्नायात् ॥ ६६ ॥ प्रालेयांशुदिने दिने च सवितुः सौम्यग्रहाणामपि वारे चैव निशाकरे शुभकरेपक्षे च कृष्णेतरे॥मूलेंद्रश्रवणोत्तरादिनकरस्वात्यश्विपुष्येंदुभिः स्त्रीणां केशकलापबंधनविधिः संतानसंपूरकः ॥६७ ॥ पौष्णादितिद्वयदिवाकरशंकरेषु मूलानिलश्रवणशीतकरोत्तरेषु ॥ सौम्यामरेज्यभृगुभानुदिनेंगनानां मानार्थभोगसुखदः खलु बालबंधः ॥ ६८ ॥ पौष्णादितिश्वसनतिष्यकरोत्तरेषु मूलं मृगारिरिपुरौद्रनिशाकरेषु॥ गुर्विंदुभानुबुध भार्गववासरेषु धम्मिल्लबंधनविधिः शुभदोंगनानाम् ॥६९॥ अदितिपव-

नमूलरेवतीपुष्यहस्ताशशिधरजशिवाख्यावासुदेवोत्तरासु ॥ अहनि गुरुशशांकब्रध्नशुक्रेंदुजानामतिशयशुभदाः स्युर्योषितां वालबंधाः ॥ ७० ॥ मूलोत्तरार्कहरिपौष्णयुगानिलानि ताराधिपद्वयपुनर्वसुपुष्यभानि ॥ शस्ते तिथौ गुरुदिवाकरभूमिजानां वारे स्त्रियाः शुभकरः खलु वालबंधः ॥ ७१ ॥ देवाचार्योत्तरासु श्रवणपवनभे दस्रकादित्यपौष्णे मूलं सौम्याभिधानां दिवसपतिगुरुक्ष्माजवाराः प्रशस्ताः ॥ त्यक्त्वा रिक्तातिथीनां हरिवृषकलशे मन्मथे वृश्चिके वा चंद्रे तारानुकूले शुभकरकरणे योषितां वालबंधः ॥ ७२ ॥ जीवारभास्करदिने गुरुहस्तमूले शक्रेंदुविष्णुपवनोत्तररोहिणीषु ॥ कन्याकुलीरवृषवृश्चिकसिंहलग्ने धम्मिल्लबंधनविधिः शुभदोंगनानाम् ॥ ७३ ॥ स्वात्यादितिश्रवणशक्रसहस्ररश्मिप्राजेशपुष्यशशलांछनमूलभेषु ॥ जीवावनेयदिननाथदिनेंगनानां धम्मिल्लबंधनविधौ विजयं वदंति ॥ ७४ ॥ भवति नरग्रहदिवसे स्त्रीणां खलुवालबंधने पुरुषः॥युवतिग्रहे हि युवति नपुंसके स्यान्नपुंसकोत्पत्तिः ॥ ७५ ॥ इति स्त्रीणां वालबंधः॥ सदशं त्रियामतोहं हिताय लोकस्य शाश्वतः सम्यक् ॥ कथयिष्ये परशुद्धिं तिथ्यादीनामिह स्त्रीणाम् ॥ ७६ ॥ स्त्रीणामृतुर्भवति षोडश वासराणि तत्रादितः परिहरेच्च निशाश्चतस्रः ॥ युग्मासु रात्रिषु नरो विषमे कुमार्य्यः कुर्यात्त्रिषेकमथ संक्रमपर्ववर्जम् ॥ ७७ ॥ युग्मासु किल मनुष्या निशासु नार्यो भवंति विषमासु ॥ दीर्घायुषः सुरूपाः

प्रायः सुभगा विकृष्टपर्वासु ॥ ७८ ॥ शशशोणितसंकाशं लाक्षारससन्निकाशमथवा यत् ॥ प्रक्षालितं विरज्यति रहितं यत्तद्भवति शुभदम् ॥ ७९ ॥ यच्छब्दावदनावर्जितं (?) त्र्यहात्संनिवर्त्तरक्तम् ॥ तत्र पुरुषसंयोगादविचारं गर्भतामेति ॥ ८० ॥ रक्तेऽधिके स्त्री पुरुषश्च शुक्रे नपुंसकं शोणितशुक्रसाम्ये ॥ तस्मादतः शुक्रविवृद्धिदानि निषेवितव्यानि रसायनानि ॥ ८१ ॥ युग्मरात्रावृतुस्नातां कृतमाल्यविभूषणाम् ॥ भुक्त्वा कांदर्पिकं द्रव्यं स्वकांतः कामिनीं व्रजेत् ॥ ८२ ॥ न नखदशनविक्षतानिः कुर्यादृतुसमये पुरुषः स्त्रियाः कथंचित् ॥ ऋतुरपि दशपट्कवासराणि प्रथमनिशात्रितयं न तत्र गम्यम् ॥ ८३ ॥ पुन्नामर्क्षे शुभे काले श्रेष्ठे युग्मासु रात्रिषु ॥ ऋतुस्नातां स्त्रियं गच्छेन्नातुरां न रजस्वलाम् ॥ ८४ ॥ स्नातः सुगंधकः प्रीतो नातृप्तः क्षुधितोऽपि वा ॥ सकामः सानुरागश्च व्यवायं पुरुषो व्रजेत् ॥ ८५ ॥ चतुर्दश्यष्टमी चैव अमावास्याथ पूर्णिमा ॥ पर्वाण्येतानि राजेंद्र रविसंक्रांतिरेव च ॥ ८६ ॥ तैलस्त्रीमांसभोगी यः पञ्चस्वेतासु वै पुमान् ॥ विण्मूत्रभोजनं नाम नरकं प्रतिपद्यते ॥ ॥ ८७ ॥ परदारान्नैव गच्छेन्मनसापि कदाचन ॥ मृतो नरकमभ्येति हीयेदत्रापि चायुषः ॥ ८८ ॥ केंद्रत्रिकोणेषु शुभग्रहेषु लग्ने शशांके च शुभैः समेते ॥ पापैस्त्रिलाभारिगतैश्च यातः पुंजन्मयोगेषु च संप्रयोगः ॥ ८९ ॥ शशांकलग्नोपगतैः शुभग्रहैस्त्रिकोणजायांबुसुखास्पदस्थितैः ॥ तृती-

यलाभारिगतैश्च पापैः सुखी स गर्भो रविणा निरीक्षितः॥९०॥ ओजांशकेषु विषमर्क्षगतैर्विलग्नैः शीतांशुसूर्य्यगुरुभिः क्रियते निषेकः ॥ जीवार्कयोः पुरुषराशिगयोः सुतार्थं लग्नाद्दिवाकरसुते विषमर्क्षगे वा ॥ ९१ ॥ इतिनिषेकः ॥ मासे तृतीयमासे स्फुरदिंदुकलापपक्षे च ॥ पुंसवनं पुत्रेप्सुर्गर्भे गर्भे प्रकुर्वीत ॥ ९२ ॥ मासि द्वितीयेऽप्यथवा तृतीये पुन्नामधेयग्रहवर्जिते च॥ अक्षीणचंद्रे कुजभानुजीवे वारे हितं पुंसवनादिकर्म ॥ ९३ ॥ मासे द्वितीये शशिवृद्धिपक्षे क्षपाकरे गोचरशोभनस्थे ॥ उत्पातपापग्रहदोषहीने निशाधिनाथेपि तिथावरिक्ते ॥९४॥ आधानतस्तृतीये मासि चतुर्थेऽपि वा सिते पक्षे॥ शशिनि शुभे विक्रूरे क्रूराक्रांतगृहस्थिते वापि॥९५॥ मासे षष्ठेष्टमे वा बलिनि तदधिपे शीतगौ चेष्टदुष्टे पुन्नामर्क्षेपि याते नरभवननवांशोदये कामिनीनाम्॥ कार्य्यं सीमंतकर्म त्रिदशपतिगुरौ केंद्रगे कोणगे वा क्रूरैः केंद्रत्रिकोणस्वनिधनरहितैर्गर्भपुष्टिं करोति ॥ ९६ ॥ षष्ठेष्टमे मासि तिथावरिक्ते शुभे शशांके परिहाय विष्टिम् ॥ कन्याकुलीरानिमिषोदयेषु सिंहे तथा पुंसवनं प्रदिष्टम् ॥९७॥ पुष्यार्कचंद्रशिवमूलपुनर्वसौ च ह्यापाढयुग्महरिभाद्रपदद्वयं ॥ च एतानि पुंसि कथितानि शुभानि भानि त्वन्येषु गर्भपतनादिभयान्नभेषु ॥ ९८ ॥ चत्वारो मृगमूलाद्या हस्तभाद्रपदद्वयम् ॥ जीवार्कभौमवाराश्च शस्ताः पुंसवने विधौ ॥ ९९ ॥ हस्तो -लं श्रवणः पुनर्वसुर्मृगशिरास्तथा . पुष्यः ॥ पुंसंज्ञितेषु

कार्य्यमेतानि शुभानि धिष्ण्यानि ॥ १०० ॥ नक्षत्रेषु पुनर्वसुमूलेंद्रतिष्यवैष्णववारेषु ॥ दिनकरगुरुवारेषु पुंसवनादिविधिः ॥ १ ॥ धिष्ण्यानि यानि मुनिभिः पुंसवनविधाविह प्रदिष्टानि ॥ गर्भाधानात्सर्वास्तैरेव शुभाः क्रियाः कुर्य्यात् ॥ २ ॥ केंद्रत्रिकोणभवनेषु पापेषु लाभग्रहस्थितेषु ॥ जीवेंदुभानुभृगुभूमिजमंदिरेषु लग्नेषु लग्नपारिशुद्धनवांशकेषु ॥ ३ ॥ केंद्रत्रिकोणभवने भवति गुरुर्गर्भपुष्टिदः स्त्रीणाम् ॥ लग्नाष्टांत्यचतुष्टयगः क्रूरो गर्भविनाशाय ॥ ४ ॥ सामिषमशनं तस्मात्प्रमदा परिवर्जयेत्ततःप्रभृति ॥ सरिदमरालयगमनं तथैव पुरुषप्रयोगेपि ॥ ५ ॥ विचित्रदेशवासस्थं व्यासं मुनिवरोत्तमम् ॥ करसंपुटांजलिं कृत्वा हारीतः परिपृच्छति ॥ ६ ॥ भगवञ्छ्रोतुमिच्छामि यथार्थं कथय प्रभो॥ स्त्रीणां पुंसवने यानि नक्षत्राणि हितानि च ॥ ७ ॥ निंदितानि यथा यानि वर्जितानि विशेषतः॥ याः शुभास्तिथयः प्रोक्ता लग्नयोगाश्च ये शुभाः ॥ ८ ॥ तत्सर्वं स्फुटमाख्याहि येन वेद्मि शुभाशुभम् ॥ ॥ व्यास उवाच ॥ ॥ पृष्टोऽहमुचितं तत्त्वं शृणु वेदांगमास्थितम् ॥९॥ मासि षष्ठेऽष्टमे मासि शुद्ध्या चंद्रमसस्तथा ॥ शुभे तिथावरिक्तायां करणे विष्टिवर्जिते ॥ ११० ॥ व्यतीपाते न वा वज्रे शूले गंडे च हर्षणे ॥ नो साद्ध्ये वैधृतौ योगे क्षीणे नास्तंगते विधौ ॥ ११ ॥ हस्तार्द्रातिष्यमूलानि सौम्यो विष्णुपुनर्वसू ॥ पौष्णपादद्वयं प्रोक्तमाषाढाद्वयमेव च ॥

ज्येष्ठा ह्येतानि हारीतधिष्ण्यान्येकादशैव तु ॥ नेष्टानि यानि शेषाणि श्रृणु तानि वदामि ते ॥ १३ ॥ स्वातौ तथा मघायां च रेवत्यां फाल्गुनीद्वये ॥ अश्विन्यां चैव नक्षत्रे यदि पुंसवनं भवेत् ॥ १४ ॥ नरः संपद्यते दैवात्तदा स्याद्गुरुतल्पगः ॥ लुब्धः क्षीणतनुः क्रूरो नारी वा कुलटा भवेत् ॥ १५ ॥ शेषाणि दश धिष्ण्यानि निंदितानि विशेषतः ॥ कन्यालिसिंहमीनेषु कर्कटस्योदये तथा ॥ १६ ॥ गुर्वादित्यकुजानां च वारे पुंसवनं हितम् ॥ शेषाणां वह्निशूले च पतनं चैव भाषितम् ॥ १७ ॥ धान्यमुद्गयवाद्यैश्च सागरैः शोणपुष्करैः ॥ लोहितैर्गिरितोयैश्च स्नापयेत्पावनैर्जलैः ॥ १८ ॥ ऊर्णासूत्रेण संग्रथ्य जीवजाती च विद्रुमम् ॥ अरिष्टं रजतं हेम दद्यात्स्नानतटांतरे ॥ १९ ॥ निधाय नाभौ बलिनस्य मूलं पुष्पं च हैमं विधिवत्सनालम् ॥ तस्मिन्प्रयायाद्गुरुगर्भवत्याः सवारहस्तैः पुरुषैः सुहृद्भिः ॥ ॥ १२० ॥ श्रीफलं च करे कृत्वा स्थाने भद्रासने शुभे ॥ गृह्यप्रोक्तं च होमं च शांतिं चैवात्र कारयेत् ॥ २१ ॥ षड्जगांधारगेयैश्च वीणावेणुस्वनैः शुभैः ॥ नानातूर्यनिनादैश्च हितं पुंसवनं नृणाम् ॥ २२ ॥ ततस्त्यजेन्महीतोयं देवखातोदकं त्यजेत् ॥ भर्तुः शय्यां मृतापत्यां तथैवामिषभोजनम् ॥ २३ ॥ अनेन विधिना जातो व्यासतुल्यःकथापरः ॥ गुणवान्रूपवांश्चैव दीर्घायुश्च भवेन्नरः ॥ २४ ॥ स्त्री वा पतिव्रता साध्वी धनपुत्रसमन्विता ॥ इतिपुंसवनम् ॥

लग्नेथ वा स्मरगृहे निधनेथ ऋक्षे तिष्ठेदसौम्यसहितो यदि शीतरश्मिः॥सौम्यग्रहा न भवंति चतुष्टयस्थाः पश्यंति नो शशधरं ध्रुव एव मृत्युः ॥२५॥ देवलो मृत्यवे चंद्रो लग्नास्तव्ययरंध्रगः॥असंयुक्तेक्षितः सौम्यैः कोणकेषु न चेच्छुभाः॥२६॥ न भवति शुभग्रहेंदुः केन्द्रत्रिकोणेपि यस्य जातस्य ॥दर्शनमपि सौम्यानां न चिरंजीवनं तस्य।२७। सुराचार्यश्च।अंशाधिपति र्जन्मपतिर्लग्नपतिश्चास्तमुपगतो यस्य॥जन्मावसरे मृत्युरतस्य भवेत्कतिपयाहेन ॥ २८ ॥ विशालाक्षश्च ॥ सप्तमे जीवितं विद्यान्नाष्टमे मासि जीवितम् ॥ क्रूरैर्विलग्नसंस्थैश्च निधनस्थे दिवाकरे ॥ २९ ॥ विष्णुः ॥ आश्लेषायां सुतार्थी व्रजति रतिविधौ रेवतीमश्विनीं वा ज्येष्ठां मूलं मघां वा निपुणतरमतिर्बीजसंतापयुक्तः।रात्रावन्यान्निहन्यात्पितरमपि दिवा संध्ययोरात्मदेहं गंडादौ गंडकांते स भवति नियतं निर्भयः सर्वदेव ॥ १३०॥निजभवनद्वयमध्ये घटिकाभोगोर्द्धभोगपरिमाणम्॥गंडाशुभफलकालं कथयंति मनीषिणः सर्वे॥३१॥मीनमेषर्क्षयोः संधौ सिंहकर्कटयोरपि ॥ कीटकोदंडयोः प्राह्णप्राणयुग्मं मनीषिणः ॥ ३२ ॥ मासं यवनाधिपतिस्तदर्द्धभागं च भागुरिः प्राह ॥ गंडगिरिस्तु दंडं तदर्द्धमर्द्धं गिरामीशः ॥ ३३ ॥ अंते पौष्णोरगैंद्राणां गंडाख्याः पंच नाडिकाः ॥ आद्येश्विमघ्यमूलानामनिष्टं नाडिकात्रयम् ॥ ३४ ॥ मूलामघाश्विचरणे प्रथमे च नूनं पौष्णेंद्रयोश्च फणिनश्चरणे चतुर्थे॥मातुः पितुः स्ववपुषोपि करोति नाशं जातो यदा निशि दिनेप्यथ संध्ययो-

श्च ॥ ३५ ॥ कथयति वराहमिहिरो विलोक्य वाक्यानि गंडविषयोऽत्र ॥ गंडं तद्द्वंद्वं द्वयोश्च संध्ययोर्मध्ये ॥ ३६ ॥ जातो न जीवति चिरमातुरपथ्यो भवेत्स्वकुलहंताच ॥ यदि जीवति गंडांते बहुगजतुरगो भवेद्भूपः ॥ ३७॥ गंडप्रसूतं पुरुषं शुभमाहुरपश्यतां नृणामेके ॥ अन्ये तुहोमपूर्वंदानेनतद्दर्शनं शुभदम् ॥ ३८ ॥ गंडादौ गंडकांते च विवाहे म्रियतेऽगना ॥ न जीवेज्जातकोऽत्रैव पितृमातृविनाशकृत् ॥ ३९ ॥ जातो न जीवेत्सीमंतविधौ गर्भस्रुतिर्भवेत् ॥ व्रतारंभे विनाशः स्यात्क्षौरे पंचत्वमादिशेत् ॥ ४० ॥ वापनं चैव धान्यानां कीर्त्यारंभविधिर्न वा ॥ यानि प्रशस्तकर्माणि तानि सर्वाणि वर्जयेत् ॥ ४१ ॥ मातापित्रोरनिष्टं स्यादेकर्क्षे यदि जायते ॥ एकांशे च विशेषेण शांतिकृद्दुःखवान्भवेत् ॥ ४२ ॥ इतिगंडः ॥ कांस्यपात्रं प्रकुर्वीत पलैःषोडशभिर्बुधः ॥ अष्टाभिर्वा चतुर्भिर्वा द्वाभ्यां वा शोधनं स्मृतम् ॥ ४३ ॥ तन्मध्ये स्थापितं शंखं नवनीतप्रपूरितम् ॥ राजचंदनमभ्यर्च्य शतपत्रसहस्रकैः ॥ ४४ ॥ दैवज्ञः सोपवासश्च शुक्लांबरधरः शुचिः ॥ सोमोहमिति संचिंत्य कुर्यादेवमतंद्रितः ॥ ४५ ॥ जपेत्साहस्रिकं जाप्यं श्रद्धधानः समाहितः ॥ दद्याद्दक्षिणामिष्टां गंडदोषोपशांतये ॥ ४६ ॥ शुद्धचामीकरं दद्यात्ताम्रपात्रं तिलान्वितम् ॥ गंडदोषोपशांत्यर्थं ज्योतिर्वेदविदे शुचिः ॥ ४७ ॥ ॐ अमृतात्मने नमः ॥ इतिमंत्रः ॥ इतिगंडशांतिः ॥ बुधगुरुभार्गवदृष्टे विद्वान्दीर्घायुरर्थपरिपूर्णः ॥ सुवाक्सुतनुः

सुधीरः सुतधनसौख्यान्वितः ख्यातः ॥ ४८ ॥ रवि शनिलोहितदृष्टे जातो मलिनोऽलसश्च रोगार्तः ॥ विधनो विरूपदेहः प्रैष्यो मूर्खः खलो दीनः ॥ ४९ ॥ आचार्य्य-सत्वमुखशौर्ययुताः सुरूपास्तेजस्विनः कृतविदो द्विजदेवभ-क्ताः ॥ सद्वस्त्रमाल्याः कुलभूषणाश्चसौम्यग्रहैर्बलयुतैः पुरुषा भवंति ॥ १५० ॥ लुब्धाः कुकर्मनिरता निजकार्य्यनिष्ठाः साधुद्विषः सकलहास्यमनोभिभूताः ॥ प्रेष्याः खला वधरता मलिनाः कृतघ्नाः पापग्रहैर्बलयुतैः पिशुनाः कुरूपाः ॥ ५१ ॥ एकोपि केंद्रभवने नवपंचमे वा भास्वान्मयूखविमलीकृतदि ग्विभासः॥निःशेषदोषमपहत्य शुभप्रसूतं दीर्घायुषंविगतरोगभ यंकरोति ॥५२॥जीवेक्षितः पंडितःशान्तमूर्त्तिर्वेदार्थशास्त्रा-गमपारबुद्धिः ॥ दीर्घायुरत्यंतशुचिः सुशीलो जातः सुपूर्णां भजते विभूतिम् ॥ ५३ ॥ विद्यावाञ्जनसुभगः सत्यरतो धार्मिकः सदा पुरुषः ॥ बांधवसुहृदुपकर्त्ता केंद्रे कोणे स्थितो जीवः ॥ ५४ ॥ इतिग्रहदर्शनचिन्ता ॥ त्रिंश-द्भागनवांशे द्रेष्काणद्वादशांशकक्षेत्रे ॥ सौम्यस्य यस्य मूर्त्तिः स भवति सुखभाजनः पुरुषः ॥ ५५ ॥ सौम्यग्रहस्य वर्गे जातः सुखवाग्विनीतरुचिरांगः ॥ धीधर्मरतियुतो विद्वा-न्दीर्घायुरतिसुभगः ॥ ५६ ॥ पापोपि पापवर्गो दुःखी मलिनो-ऽलसश्च दुःखार्तः ॥ प्रेष्यः खलोऽतिदीनो मूर्खःस्तेनोऽर्थही-नश्च ॥ ५७ ॥ क्रूरः सुदुःखभागी पापरतो दुर्जनो-प्यविश्रंभी ॥ मलिनोऽलसश्च दीनो द्यूतरतो निर्द्धनः सदा

पुरुषः ॥ ५८ ॥ इतिषड्वर्गनिर्णयः ॥ प्रचंडरूपः पुरुषः प्रतापी प्रजाधिकः स्वल्पवचोऽसहिष्णुः ॥ पित्तप्रधानः प्रणतप्रियोपि सूर्ये विलग्ने भवति प्रजातः ॥ ५९ ॥ संभोगशीलो बहुधर्मशीलः शीलप्रधानो बहुमित्रपुत्रः ॥ मेषे वृषे कर्किणि वा विलग्ने विधौ विहीनः परिशेषभेषु॥१६०॥ क्रूरः परस्वापचयप्रचारो दुरात्मको दुर्गतिको दुरुक्तः ॥ स्वल्पायुरल्पव्रणिणो गुणज्ञः कुजे विचेलो विकलो विलग्ने ॥ ॥ ६१ ॥ नानागमग्रंथविशेषवेत्ता विख्यातनामा नृपपूजितश्च ॥ साधुः सधर्मो भवति प्रसूतो लग्नस्थिते चंद्रसुते चिरायुः ॥ ६२ ॥ सुविक्रमः सत्यवचाः सुरूपः प्रियंवदो धर्मरतो नरेन्द्रः ॥ सौम्ये सुरूपो गतते (?) विलग्ने विचक्षणः कांतिपरो वरिष्ठः ॥६३ ॥ होरासंस्थे जीवे सुशरीरः प्राणवान्सुदीर्घायुः ॥ सुसमीक्षितआर्यपरः प्राज्ञो धीरः सुशीलश्च ॥ ॥ ६४ ॥ प्रबोधमेधासुवपुःसुताढ्यः सुकर्मकामानुपारिच्छदोऽपि ॥ भूयोऽथ वा भूपसमो मृगस्थे जीवे विलग्नेरिपुर्चिरायुः ॥ ६५ ॥ धर्मी धनी धीवलवान्विपक्षः पक्षक्षयावासवरप्रतिष्ठः ॥ कांतः कलाकाव्यकरस्तु धर्मे शुक्रे शतायुः सुकलत्रपुत्रः ॥ ६६ ॥ रुचिरतनुः प्रमदाजनयुक्तः शुक्रे निर्मलविद्यायुक्तः ॥ लग्नगते रुचिरांगदमूर्त्तिर्धर्मरतः पृथुसाहसबुद्धिः ॥ ६७ ॥ भवेन्नरेंद्रप्रतिमः प्रसूतः शुक्रांगिरोगेहगते विलग्ने ॥ मार्तंडगे मांडलिकोऽथ वा स्याद-न्यत्र लग्नोपगते गतायुः ॥ ६८ ॥ सुभगः सुरुचिरुदारः

पितुरधिको भवति सप्तमे जातः ॥ वक्ता कविप्रधानः प्राज्ञो जीवेऽतिविख्यातः ॥ ६९ ॥ सुतधनयोपिद्बहुलो नृपतिसमो भाग्यपरिपूर्णः॥ स भवति चिरायुः पुरुषो होरायाःसप्तमे भृगुजे ॥ १७० ॥ सुनयनवदनशरीरं तेजस्विनं दीर्घायुषं तथा ख्यातम् ॥ युवतिजननयनकांतं जनयति होरागतः शुक्रः ॥ ॥ ७१ ॥ इतिभावबलम् ॥ अल्पाकुंचितमूर्द्धजः पटुमतिर्मुख्यः सुरूपः खलो नात्युच्चो मधुपिंगलोरुनयनः शूरः प्रचंडः स्थिरः ॥ रक्तः श्यामतनुर्निगूढचरणः पीतास्थिरोमाहनुर्गंभीरश्चतुरः शठश्च पृथुलः कौसुंभवासा रविः ॥ ७२ ॥ सौम्यःकांतविलोचनो मधुरवाग्गौरः कृशांगो युवा प्राज्ञः सूक्ष्मविकुंचितासितकचः सौम्यो मृदुः सात्त्विकः ॥ चारुर्वातकफात्मकः प्रियसखो रक्तैकसारो घृणी वृत्तः स्त्रीषु रतश्चलोऽतिसुभगः शुक्लांबरश्चंद्रमाः ॥ ७३ ॥ ह्रस्वः पिंगललोचनो दृढवपुर्दीप्ताग्निकांतिश्चलो मज्जावांस्तरुणांबरः पटुतरः शूरोऽथ विस्पष्टवाक् ॥ हिंस्रः कुंचितकेशदीर्घतरुणः पित्तात्मकस्तामसश्चंडः साहसिको विघातकुशलः संरक्तगौरः कुजः ॥ ७४ ॥ रक्तांतायतलोचनो मधुरवाग्दूर्वादलश्यामलस्त्वक्सारो विरजोधिकः स्फुटवचाः पीनस्त्रिदोषात्मकः ॥ दृप्तो मध्यमरूपवान्सुनिपुणो वृत्तः शिराभिस्ततः सर्वस्यार्थकरोऽतिकोशरचनां पालाशवासा बुधः ॥ ॥ ७५ ॥ ईषत्पिंगललोचनः श्रुतिधरः सिंहादिनादः स्थिरः सत्वाढ्यः सुविशुद्धकांचनतनुः पीनोन्नतोरःस्थलः ॥ ह्रस्वो

भूतिपरोऽतिनीतिनिपुणो बद्धोर्द्ध्वजूटः क्षमी व्यापीतांबरधृक्प्रवर्द्धिततनुर्मंदःप्रधानो गुरुः ॥ ७६ ॥ चारुर्दीर्घभुजः पृथूरुवदनः शुक्राधिकः कांतिमान्कृष्णालंबितसूक्ष्मलुंचितकचो दूर्वादलश्यामलः ॥ कामी वातकफात्मकोऽतिसुभगश्चित्रांबरो राजसो लीलाधीमतिमान्विशालनयनः स्थूलांगदेशः सितः ॥ ७७ ॥ पिंगो निम्नविलोचनः कृशतनुर्दीर्घःशिरालोऽलसः कृष्णांगः पवनात्मकोऽतिपिशुनः स्वार्थान्वितो निर्घृणः ॥ मूर्खःस्थूलनखद्विजोतिमदनो वक्रोरुचिस्तामसो रौद्रः क्रोधपरो जरापरिणतः कृष्णांबरो भास्करिः ॥ ७८ ॥ इतिग्रहभेदः ॥ एकः पापोष्टमगः शत्रुगृहे पापवीक्षितो वर्षात् ॥ मारयति नरं जातं सुधारसो येन पीतोऽपि ॥ ७९ ॥ सर्वानिमानतिबलं स्फुटदंशुजालो लग्नोपगः प्रशमयेत्सुरराजमंत्री ॥ एको बहूनि दुरितानि सुदुस्तराणि भक्त्या प्रयुक्त इव शूलधरप्रणामः ॥ ॥ १८० ॥ पक्षे सिते भवति जन्म यदि क्षपायां कृष्णे च वाऽहनि शुभाशुभदृष्टमूर्तिः ॥ तच्चंद्रमा रिपुविनाशगतोऽपि यत्नादापत्सु रक्षति पितेव शिशुं न हंति ॥ ८१ ॥ बुधविबुधासुरसचिवद्रेक्काणनवांशके शशिनि ॥ भवति चिरायुस्ततः संभाव्यानेकरिष्टोपि ॥ ८२ ॥ चंद्रः शुभवर्गस्थः क्षीणोपि शुभेक्षितो हरति रिष्टम् ॥ जलमिव महातुपारं जातीफलवल्कलक्वथितम् ॥ ८३ ॥ आपूर्य्यमाणमूर्त्तिर्द्वादशभागे शुभस्य यदि चंद्रः ॥ रिष्टं नयति विनाशं तक्राभ्या-

सो यथा गुदजम् ॥ ८५॥ इतिरिष्टभंगः॥ स्थितिकालदृष्टि-
चेष्टानिसर्गवेलादिदिग्भवंयच ॥ सप्तविधं बलमाहुर्ग्रहस्य तच
त्नतश्चित्यम् ॥ ८६ ॥ दश । १० । गुण । ३ । मनुयुक् ।
। २८ । तिथि ।१५। शर ।५। सप्ताधिकविंश ।२७। विंश-
गेषु ॥ रव्याद्युच्चंप्रथमवृषभमृगयुवतीकुलीरमीनतुलाः ॥ ८७ ॥
सिंहाजतौलिकलशाश्विपुविंशभागाः सूर्य्यादिनेयकविमंदगुरो-
स्त्रिकोणम् ॥ तुंगांशकानपरतोसिंहितावृषेंदेः कन्यांशकाश्चक-
थितावृषभस्यशेषाः॥८८॥ गत्वा त्रिकोणसुहृदात्मगृहंप्रयत्ना-
त्स्वांशस्थिताः शुभकराअपितेग्रहेंद्राः ॥ होरांशमासशरदां
पतयोतिवीर्य्याः पापाःशुभाश्चबहुलापरपक्षसंस्थाः ॥ ८९ ॥
लग्नेऽगिराविधुसुतौ रविभूमिजौ खे शौरिर्मदे सितशनी सुखभे
सुवीर्ये ॥ चंद्रो रविश्च मकरादिकराशिषट्के सम्यक् फलं
बलयुतः प्रकरोत्यशेषम् ॥ १९० ॥ इतिग्रहबलचिंता ॥
स्वोच्चस्थिताः श्रेष्ठफला भवंति मूलत्रिकोणे स्वगृहे च मध्याः॥
दुष्टेक्षिता मित्रगृहाश्रिताश्च वीर्यं कनीयः समुपावहंति॥१९१॥
स्वोच्चेस्थितः शुभफलं प्रकरोति पूर्णं नीचर्क्षगस्तु विफलं रिपु-
मंदिरेऽल्पम् ॥ पादंफलन्त्वहितभे स्वगृहे तथार्द्धं पादत्रयं गग-
नगः स्थितवांस्त्रिकोणे ॥ ९२ ॥ नीचर्क्षगः सकलमेव करोति
पापं न्यूनं च किंचिदरिभे विफलं स्वतुंगे ॥ पादत्रयं हितगृहे
विहगोऽशुभस्य स्वर्क्षे दलं सचरणं स्थितवांस्त्रिकोणे ॥ ९३ ॥
अत्यंगिराः सवितृलुप्तकरादिरूपा नीचंगता रिपुगृहंच नभश्च-
रेंद्राः॥युद्धेजिताः शुभफलानि विनाशयंति पापान्विताश्च सुत-

रां परिवर्द्धयंति ॥९४॥ रिपुभेरिपुभागे वा रिपुत्रिकोणेभो गेच-
वा ॥ न भवति विहगः शुभदः स्फुरदंशुकलाकलापोपि ॥९५॥
॥ इतिग्रहाणामिष्टानिष्टचिंता ॥ सूर्योदयगैर्वेशिर्द्वितीय
गैश्चंद्रवर्ज्जितैर्वोशिः ॥ उभयस्थितैर्ग्रहेन्द्रैरुभयचरीनामतःप्रो-
क्ता ॥९६॥ मंदमृदुस्थिरवचनंपरिभूतपरिश्रमं नतार्द्धतनुम् ॥
कथयवनाधिपतिर्वेशिसमुत्थंत्वथोदष्टिम् ॥ ९७ ॥ उदधृष्टव-
चाः स्मृतवानुयोगयुतोनिरीक्षतेतिर्य्यक् ॥ पूर्वशरीरेपृ-
थुलः स्तब्धगतिः सात्विको वोशौ ॥ ९८ ॥ सर्वसहःसमदृक्
समकायसुस्थितो विपुलसत्वः ॥ नात्युच्चः परिपूर्णः सिंहग्रीवो
भवेदुभयचर्य्याम् ॥ ९९ ॥ पूर्वोक्तारिष्टरहिते ग्रहराशिचक्रे
स्वर्गत्रिकोणसुहृदुच्चगृहस्थितेषु ॥ शुद्धांशुजालजटिलेषु नभ-
श्चरेषु जन्मप्रशस्तमथनेष्टमतोन्यथास्यात् ॥ २०० ॥
इतिवेश्यादियोगाः ॥ जातस्य जातकर्मादिक्रियाकांडम
शेषतः ॥ पुत्रस्य च पिता कुर्याच्छ्राद्धं चाभ्युदयात्मकम्
॥ १ ॥ पुत्रोत्पत्तौ सदाश्राद्धं श्राद्धं प्रसवके तथा ॥ चूडाका
र्ये व्रते चापि नाम्नि पुंसवनेपि च ॥ २ ॥ पाणिग्रहे प्रति-
ष्ठायां प्रवेशे नववेश्मनः ॥ एतद्वृद्धिकरं नाम गृहस्थस्य
विधीयते ॥ ३ ॥ कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः ॥
नामकर्मणि बालानां चूडाकर्मादिके तथा ॥४॥ सीमंतोन्नयने
चैव पुत्रादिमुखदर्शने ॥ नांदीमुखान्पितृगणान्पूजयेत्प्र-
यतोगृही ॥ ५ ॥ पितॄणां रूपमास्थाय देवा ह्यन्नं समश्नु
ते ॥ तस्मात्सव्येन दातव्यं वृद्धिश्राद्धेषु दातृभिः ॥ ६ ॥

दूर्वायवैः सबदरैर्मिश्रान्पिडान्मुदायुतः ॥ नांदीमुखेन तर्थिन दद्यादेवं न पार्थिवः ॥ ७ ॥ मातॄणां प्रथमं श्राद्धं पितॄणां तदनंतरम् ॥ ततो मातामहानां च वृद्धिश्राद्धे प्रकीर्त्तितम् ॥ ८ ॥ नांदीमुखे विवाहे च प्रपितामहपूर्वकम् ॥ वाक्यं समुच्चरेद्धीमान न्यत्रपितृपूर्वकम् ॥ ९ ॥ पुरूरवोमाद्रवश्चकमुदक्षौ पूर्वयज्ञयोः ॥ नांदीमुखे वसुसत्यौ कन्यां रुचिविरोचनौ ॥ १० ॥ कालकामौ तु विज्ञेयावग्निकार्य्ये द्विजोत्तमैः ॥ विश्वेदेवाः समाख्याताः श्राद्ध-कर्मसु सर्वदा ॥ ११ ॥ अंभोदधियवबदरैरवक्रदर्भैनभक्तिया पूर्वम् ॥ सव्येन पश्चिममुखः पूर्वमुखे द्विजवरे दद्यात् ॥ १२ ॥ इतिवृद्धिश्राद्धम् ॥ दशमे द्वादशके वा शतरात्रे वा यथा वारम् ॥ नामकरणं प्रशस्तं प्रशस्ततिथ्यादिकेष्वपि वा ॥ १३ ॥ ततस्तु नाम कुर्वीत पितैव दशमेऽहनि ॥ देवपूर्वं नराख्यं हि शर्मवर्मादिसंयुतम् ॥ शर्मेति ब्राह्मणानां स्याद्वर्मेति क्षत्रियस्यच ॥ गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः ॥ १५ ॥ नार्थहीनं न चाक्लिष्टं नापशब्दात्मकंतथा ॥ नामतुल्यं तु गुप्तं वा नाम कुर्य्यात्समाक्षरम् ॥ १६ ॥ नातिदीर्घं न ह्रस्वं वा नातिगुरुं न चाविलम् ॥ सुखोच्चार्यं यथा नाम कुर्य्यायतांतदक्षरम् (?)॥ १७ ॥ कन्या नदी पर्वतपादपानां नाम्नी तथा यूपदिवौकसां च ॥ (?) अंतेरचामे रमरस्यसंज्ञा क्रमात्सरित्पादपगोत्रनाम्नी ॥ १८ ॥ दृष्टरजाःपरपुरुपरता न विवाह्या कन्यका सद्भिः ॥ १९ ॥ इति नामप्रशंसा ॥ मार्गशिरायाः केशवनारायणमाधवाः

सगोविंदाः ॥ विष्णुमधुसूदनाख्योत्रिविक्रमोमाधवश्चेति ॥ २० ॥ तस्माच्छ्रीधरनामातदनुहृषीकेशपद्मनाभोच ॥ दामोदरइत्येते मासाः प्रोक्ता यथासंख्यम् ॥ २१ ॥ इतिनाम ॥ तृतीये मासि कर्त्तव्यं शिशोर्निष्कासनं गृहात् ॥ षष्ठेन्नप्राशनं कुर्य्याच्चूडा कार्या यथाकुलम् ॥ २२ ॥ अहन्येकादशे नाम तृतीये मासि निष्क्रमः ॥ मासे तृतीये शशिवृद्धपक्षे क्षपाकरे गोचरशोभनस्थे ॥ उत्पातपातग्रहवर्जितेभे निष्कासनं सौख्यकरं शिशूनाम् ॥ २३ ॥ कमलजहरिहस्तादित्यपुष्यानुराधास्वशाशि (?) नरशिभत्वष्टृभेपूत्तरेषु ॥ अदितितनयपूज्यज्ञेंदुदैत्यार्चितानामहनिकिलशिशूनां निष्क्रमं प्राहुरिष्टम् ॥ २४ ॥ ब्रह्मोत्तरकरकेशवगुरुभदितींदुमित्र चित्रासु ॥ सौम्यग्रहेषु वारेष्वाभिनवशिशुनिष्क्रमः शुभदः ॥ ॥ २५ ॥ स्वात्यश्विपुष्यकरमूलपुनर्वसौ तु पौष्णानुराध हरिपंकजवासवेषु ॥ वारेषु जीवभृगुभानुशशींदुजानांनिष्कासनं शुभकरं कथितं शिशूनाम् ॥ २६ ॥ मूलानुराधहरितिष्यदिवाकरेषु पौष्णाश्विनीकमलजादितिवासवेषु ॥ जीवेंदुसौम्यरविवासरभार्गवेषु निष्कासनं स्वभवनात्प्रथमं प्रदिष्टम् ॥ २७ ॥ धातानुराधाश्रवणाश्वपुण्या मूलाश्विशक्रादितिसौम्यपौष्णाः ॥ वाराश्चवागीशसितेंदुसूर्या निष्कासने सौख्यकराः शिशूनाम् ॥ २८ ॥ इति निष्कासनम् ॥ सार्द्धयुग्मकमासेषु पूगस्य प्राशनं हितम् ॥ षड्भिरन्नं तु मासैस्तु भोगभोगी भवेन्नरः ॥ २९ ॥ सार्द्धमासद्वये दद्यात्तांबूलं प्रथमं

शिशोः॥कर्पूरादिकसंमिश्रं विलासाय हिताय च ॥ ३० ॥ मूलाश्विमैत्रकरतिष्यहरींदुभेषु पौष्णे तथा मृगशिरादितिया-सवेषु ॥ अर्केंदुजीवभृगुबोधनवासरेषु ताम्बूलभक्षणविधि-र्मुनिभिः प्रदिष्टः ॥ ३१ ॥ मूलादितिद्रविणतिष्यकरोत्तरा सु पौष्णाश्विविष्णुरजनीकरशक्रभेषु ॥ वारेषु जीवशशी सूर्यसितेंदुजानां तांबूलभक्षणविधिः कथितः शिशूनाम् ॥ ॥ ३२ ॥ पौष्णादितिश्रवणपुष्यधनिष्ठहस्ताचित्रोत्तरा-स्वसुरनायकसंयुतासु ॥ जीवेंदुसौम्यभृगुनंदनवासरेषु तांबूलभक्षणविधिर्विहितः शिशूनाम् ॥ ३३ ॥ दिनकरचंद्रसमीरणमैत्रपुष्यपुनर्वसुरेवतिचित्रम् ॥ मृगघटमन्मथकन्य समेतं पूगफलासनमेति त्वभीष्टम् ॥ ३४ ॥ दुश्चिक्यलाभारिगताश्चपापाः सौम्यग्रहा नवमपंचमकंटकस्थाः ॥ आरोग्यभाग्विपुलभोगसुखोपविष्टास्तांबूलभक्षणविधौ जगति प्रसिद्धाः इतितांबूलभक्षणम् ॥ ॥ षष्ठे मासे शुभे चंद्रे पक्षे वाप्यसितेतरे ॥ अन्नस्य प्राशनं कुर्य्याद्धिताय प्रथमं शिशोः ॥ ३६ ॥ चित्रास्वातिपुनर्वसुर्मृगशिरः पुष्यानुराधा तथा रोहिण्युत्तररेवतीरविमघाप्रामाविशाखाश्विनी ॥ देवाचार्यदिने रवौ भृगुसुते शीतांशुजे शीतगोगोकन्यामिथुनोदये-ष्वथ वृषे शस्तोऽन्नपाने शिशोः ॥ ३७ ॥ हस्तपुष्यपुनर्वसुकमलजज्येंदुमैत्राश्विनी (?) वायव्योत्तरवासवानिलमघापौष्णेष्वरिक्तेतिथौ ॥ वारेष्विंदुजभार्गवेंदुदिनकृद्वाचस्पतीनां शिशोर-न्नप्राशनमंगनामिथुनगोमीनोदयेशोभनम् ॥ ३८ ॥ अनिलें

द्राग्न्यनुराधामित्रधनिष्ठाश्विनींदुगुरुभेषु ॥ चित्रादित्यकरेषु बालानां प्राशनं शस्तम् ॥ ३९ ॥ पौष्णादितिमघानुराधा पुष्यो विशाखाश्विशशांकचित्रा ॥ गोमीनकन्यामिथुनेषु पुंसामन्नोपभोगाः प्रथमं प्रदिष्टाः ॥ ४० ॥ षष्ठे मासि निशाकरे शुभकरे पक्षे च कृष्णोत्तरे सब्रह्मश्वसनादितिद्वयमघाचित्रोत्तरादिद्वये ॥ सूर्याचार्यसितेंदुचंद्रजदिने सौम्यर्क्षलग्ने नृणामन्नप्राशनमामनंतिनितरामारोग्यसौख्यप्रदम् ॥ ४१ ॥ षष्ठे मासि प्रकुर्वीत शिशूनामन्नभक्षणम् ॥ हस्तादिपंचके धिष्ण्ये मृगपुष्याश्विनीषु च ॥ ४२ ॥ अश्विनीमघाचित्रासु स्वातौ मृगशिरःस्वपि ॥ पुष्यहस्तानुराधेषु कुर्य्यादन्नस्य भक्षणम् ॥ ४३ ॥ वाचालो बलवान्दिने दिनपतेरत्यंतदीप्तानलो देही चाल्पहुताशनः शिशिरगोः कौजेरुजापीडितः ॥ बौधे भोगप्रियः सुखप्रथमभुग्जीवे चिरायुः सुखी शुक्रो नातिबलान्वितोतिमलिनो मंदे च मंदानलः ॥ ॥ ४४ ॥ भक्तादिभक्ष्यप्रथमोपभोगी सुधीर्भवेद्वासनुदिने मनुष्यः ॥ स्याद्वासनाशीर्णतनुः शशांके कौजे रुजार्तोबलवह्निहीनः ॥ ४५ ॥ बेधे विलासी(?)सुरेज्येशुक्रेतिसौख्यं धनमायुराशिः ॥ सौरे तथा वीर्यविमुक्तिशीलो मलीमसांगो भवतीत्यवश्यम् ॥ ४६ ॥ क्षुद्रोगवान्प्रथमभुक्प्रथमेति लग्ने मंदानिलो घटतुलाविकुलीरभेषु ॥ स्यामाशनो मृगमृगाधिपकार्मुकेषु मीनांगनामिथुनगोषु वरान्नभोजी ॥ ४७ ॥ दुःखी लग्नगते रवौ क्षितिसुते स्यात्पित्तरोगार्दितो वातार्ता

दिनकृत्सुतेन शशिना क्षीणेन भिक्षाटनम् ॥ ज्ञानी चंद्रसुतेन शुद्धवपुषा शुक्रेण भोगान्वितो दीर्घायुर्गुरुणेंदुना च महता यज्वाथ शास्त्रार्थवित् ॥ ४८ ॥ लग्नत्रिषष्ठभवनोपगताश्च पापाः सौम्या ग्रहा नवमपंचमकंटकस्थाः॥ लग्नेषु दैत्यसचिवज्ञबृहस्पतीनामन्नोपभोगकरणे विविधोपभोक्ता ॥ ॥ ४९ ॥ सौम्यामरेज्यभृगुनंदनवासरेषु लग्नेषु लग्नपरिशुद्धनवांशकेषु ॥ नीचोद्भवोपि भवति प्रथमोपभोक्ता वीरोवरान्नकुसुमांबरकामिनीनाम्॥ ५० ॥ इत्यन्नप्राशनम् ॥ हस्तत्रयं मृगशिरः श्रवणत्रयं च पौष्णाश्विशक्रगुरुभानिपुनर्वसुश्च ॥ क्षौरे च कर्माणि हितान्युदये क्षणे च युक्तानि चोडुपतिना यदि शस्तताराः ॥५८ ॥ पौष्णाश्वितिष्यवसुवासववासुदेववातार्कचित्रवरुणादितिचंद्रभेषु॥ वारेषु सौम्यबुधवाक्पतिभार्गवाणां क्षौरं हितं शुभफलासु चतारकासु॥ ५९॥ रेवत्यदितिद्वितयं विष्णुभात्करत्रिकम्॥ मृगशीर्षस्तथा ज्येष्ठा क्षौरे श्रेष्ठफलाः स्मृताः ॥ ६० ॥ शस्तं भार्गवदिवसे सुरगुरुदिवसेऽह्नि चंद्रशशिजे च ॥ रविणा सन्निहितेऽग्नौ क्षौरं कुर्यान्मुनिभिरुक्तम् ॥ ६१ ॥ चांद्रे बलानि गदितानि सुखायुरात्मबोधे दिने भवतिधीर्धनधान्यता च ॥ जीवे त्रिदोषशमनं लभते च पूजां नागांगनाभवसुखं दिवसे सितस्य॥ वागीशशुक्रज्ञनिशाकराणां वारेषु शस्तं मुनयो वदंति ॥ सौरेर्दिने तीक्ष्णरुचेस्तु चैत्रे मासेथवा सन्निहिते हुताशे ॥६३ ॥ आरोग्यमिंदुजदिने चिरजीवितत्वं जीवस्य भानुमतिमान्प्रबलं बलं वा ॥ नाना

अयं विषयभोगसुखं सितस्य मंदस्य बंधनविधौ गवि विश्व-नाशः ॥ ६४ ॥ आयुःक्षयं प्रकुरुते दिनकृद्दिने च दोषापते-रपि सुखानि च दीर्घमायुः ॥ पृथ्वीसुतस्य च सुरैरपि रक्षि-तानां क्षौरं करोति निधनं त्वचिरं नराणाम् ॥ ६५ ॥ मासं हरेत्क्षौरमिहायुषोर्कः शनैश्वरः पंच कुजस्तथाष्टौ॥ आचार्य्य-भृग्विदुबुधाः क्रमेण दशुर्दशैकादश पंच सप्त ॥ ६६ ॥ हंति रोगं गुरुः सौम्यः शुक्रः शुक्रविवर्द्धनम् ॥ आयुरंगारको हंति सर्वं हंति शनैश्वरः ॥६७॥ पित्तज्वरपरिपीडां चूडा मेषोदये वृषे च परिपुष्टिम् ॥प्रज्ञा नृयुग्मलग्ने कर्किणिचिररोगकंपभय-म् ॥ ६८ ॥ प्रमादिवातमचिराज्जनयति मृगराजलग्ने च ॥ आरोग्यमंगनायां तौलिनि विदधाति रोगं च॥६९॥आख्याम-यकीटो बुद्धिविनाशं बलस्य नाशं च॥मेधां धनुषि विधत्ते मकरे सौख्यानि धनलाभम् ॥७०॥कुंभे बलप्रवृद्धिमारोग्यत्वं प्रभूत-धनलाभम्॥मीने करोति विमलां दृष्टिं पुष्टिं च तुष्टिं च॥७१॥ क्षौरं प्रशस्तं मृगचापलग्ने स्त्रियाश्च कुंभे मिथुने वृषे च ॥ पुष्टिं बलं बुद्धिविवर्द्धनं च शेषेषु रोगं कुरुते भयं च ॥ ७२ ॥ चूडाकर्म न कर्त्तव्यं तिग्मांशोर्दक्षिणायने ॥ चूडोपनयनं कार्य्यं नातिकर्णप्रवेधनम् ॥ ७३॥ क्षौरर्क्षे स्वकुलोद्भवेन विधिना चू-डा विधेया बुधैर्लग्नस्थे भृगुजे चतुष्टयगते जीवेऽथवा बोधने ॥ मंदार्कावनिनंदनैश्च शशिना क्षीणेन युक्तेन वा लाभो राशि-तृतीयभेषु विहिते लग्नोदये सर्वदा ॥ ७४ ॥ सूर्य्ये दक्षिण-मार्गचारिणि हरौ सुप्ते निरंशे रवौ क्षीणे शीतरुचौ महीज-

यमयोर्वारे निशासंध्ययोः ॥ शुक्रेऽव्यक्ततनौ वियुद्धसमये-ऽलंकारयुक्ते शिशौ क्षौरे रोगभयं वदंति यवना मृत्युं तथाऽन्ये जगुः ॥ ७५ ॥ न स्नातमात्रगमनोत्सुकभूपिता-नामभ्यक्तभुक्तरणकालनिवासनानाम् ॥ सन्ध्यानिशाकुज-दिनेषु तिथौ च रिक्ते क्षौरं हितं न नवमेऽह्नि न चापि वि-ष्टयाम् ॥ ७६ ॥ दैवकार्ये पितुः श्राद्धे चंद्रस्यचपरिक्षये ॥ क्षुरकर्म न कुर्यात्तु जन्ममासेऽथ जन्मभे ॥ ७७ ॥ रात्रि-भागः समाख्यातः खरांशोर्दक्षिणायनम् ॥ व्रतबंधादिकं तस्माच्चूडाकर्म च वर्जयेत् ॥ ७८ ॥ नृपाज्ञया ब्राह्म-णसंमतेन विवाहकाले मृतसूतके च ॥ बंधस्य मोक्षे क्रतुदी-क्षणे च सर्वेषु शस्तं क्षुरकर्म भेषु ॥ ७९ ॥ अधिमासे च यत्क्षौरं जन्ममासे च जन्मभे ॥ न भवेत्तत्र कल्याणं शुभ-कन्न हि संस्मृतम् ॥ ८० ॥ राजा कुर्यात्पंचमे पंचमेऽह्नि क्षौरर्क्षे वा श्मश्रु तस्योदये वा । त्यक्त्वा ताराः पंचसप्तत्रिपूर्वा यात्राकाले नैव कार्यं च शुध्दे ॥ ८१ ॥ शुद्धेषु यानि मुनिभिः क्षौरधिष्ण्यानि तानि च ॥ दन्तनखकूर्च रचनास्वतीवशुभानि वै ॥ ८२ ॥ क्षौरं रवावुत्तरमार्गसं स्थे संप्राप्तबोधे मधुसूदने वा ॥ अनोजसंख्यास्वपि तारकासु कुर्यान्नवम्यामथ तारकायाम् ॥ ८३ ॥ नक्षत्रे च करक्षपाकरगुरुज्येष्ठाधनिष्ठाश्विनीपौष्णादित्यनलार्कवारुणहरि त्वाष्ट्रेषु शस्तेक्षणे ॥ कर्त्तव्यं क्षणदाकरे चलयति क्षौरं सुतारान्विते क्षौरर्क्षे न नचेह्नि पर्वणि तथा विष्टयांच

पष्ठयामपि ॥ ८४ ॥ चंद्रे च सप्तोपचयायसंस्थे तिथावरिक्ते शशिवृद्धिपक्षे॥प्राचीमुखःसौम्यसुखोपि भूत्वा कुर्यान्नरःक्षौरमत्युत्कदःस्यात् ॥ ८५ ॥ इति चूडाकरणम् ॥ अर्केनुकूले शशिनि प्रशस्ते तारावले चेंदुविवृद्धिपक्षे ॥ अयुग्मवर्षेशुभदंः शिशूनां कर्णप्रवेधं मुनयो वदंति ॥ ८६ ॥ ताराचंद्रेनुकूलेह्नि शस्ते भास्वति वाक्पतौ ॥ अजे संवत्सरे प्राहुः कर्णवेधविधिं बुधाः ॥ ८७ ॥ स्वात्यश्विनीहस्तपुनर्वसौ च चंद्रेनुकूले गुरुशुक्रवारे ॥ वेध्यौ तु कर्णावचरे च लग्ने तिष्येंदुचित्राहरिरेवतीषु ॥ ८८ ॥ हस्तादितिश्रवणमित्रधनिष्ठभेषु पौष्णाश्वितिष्यमनुदिवाकरेषु (?) ॥ जीवेंदुनंदनसितेंदुहितेनराणां कर्णप्रवेधकरणानि भृशं शुभानि ॥ ८९ ॥ त्विंद्रपौष्णगुरुभेषु च वैष्णवेषु लग्नोपगे सुरपुरोधसि कर्णवेधम्॥कुर्यात्तथा(?)क्षुरकर्मभानि सर्वाण्यभीष्टफलदानि च कर्णवेधे ॥ ९० ॥ मैत्रेहयेत्रे हरिगुरुसहिते स्वातिपौष्णाश्विनीषु शक्रादित्येशसौम्ये शिशिरकरसुते भार्गवेंदौ गुरौ च ॥ पक्षे शुक्ले नचास्तंगतवति भृगुजे नैव रिक्ते तिथौ च केंद्रे जीवे भृगौ वा सहजारिपुगतैः पापकैः कर्णवेधः ॥९१॥ शुष्यत्यर्कदिने(?)शशिदिनेस्यारे तथाकर्णयोः सौरे रंध्रविहीनता श्रवणयोः पृथ्वीसुतेत्रसुतः॥एवं भद्रकमल्परंध्रमपरं स्यात्कर्णयुग्मं बुधे जीवे चातुवपु युग्मकर्णवहतिः स्याच्छोभने भार्गवे ॥ ९२ ॥ सूर्य्ये योगवियोगशोकमरणं कर्णप्रवेधे नृणां भौमे क्रुध्यति शीतवह्निरविजे मृत्यो-

र्भयं मत्यहम् ॥ सोमे क्षीणतनुर्भवेच्छिशुरथो चैकं वधे भद्रकं जीवे भार्गववासरे बहुसुखं चित्रोपमं कर्णयोः ॥ ९३ ॥ कुजार्कार्किजचंद्राणां वारे कर्णे तुरुयतः(?)॥ गुरुशुक्रबुधानां च कर्णयुग्मं तु शोभनम् ॥९४॥ कर्णवेधो विनिर्दिष्टो विलग्ने च बृहस्पतौ॥तदभावे त्रिकोणस्थे चंद्रस्थे तदभावतः॥९५॥ लाभे तृतीये च शुभः समेतैः पापैर्विहीने शुभराशिलग्ने॥ वेधौ तु कर्णावसरे खलग्ने ( ? ) तिष्येंदुचैत्रहरिपौष्णभेषु ॥ ९६ ॥ ॥ इति कर्णवेधः ॥ विद्यारंभः प्रशस्तो भवति मधुरिपो प्राप्तबोधे सुधांशौ शस्तेतीक्ष्णद्युतौ च त्रिदशपतिगुराबुद्गते वापि शुक्रे ॥ अप्राप्ते सिंहराशौ दशशतकिरणो वापि दैत्यारिपूज्ये स्वाध्याये भानुशुक्रत्रिदशगुरुदिने लग्नसंस्थे च जीवे ॥९७ ॥ पुष्यो वा मूलमाश्लेषा हस्तश्चित्रा मृगस्तथा ॥ विद्यारंभे प्रशस्ताः स्युः पूर्वात्रितयमेव च ॥ ९८ ॥ पूर्वात्रयंत्वाष्ट्रदिवाकराहिर्गुर्विंदुमूलानिच शंकराणि ॥ दिनानि शुक्रार्कबृहस्पतीनां विद्योपविद्यासु हितप्रदानि ॥ ९९ ॥ सार्पं रौद्रं करं सौम्यं गुरुं त्वाष्ट्रं तथादितिः ॥३००॥ हस्तादितींदुगुरुपौष्णसुरेज्यचित्रावातेशदेवतभुजंगमपूर्विकाणि ॥ वारेषु जीवभृगुनंदनभास्कराणां विद्यासु चैव शुभदानि भवन्ति तानि ॥ १ ॥ विद्यारंभे गुरुः श्रेष्ठो मध्यमौ भृगुभास्करौ ॥ मरणं शनिभौमाभ्यामविद्या बुधसोमयोः ॥ २ ॥ प्रज्ञार्कगुरुशुक्राणां विपन्मंदमहीजयोः ॥ महती जडता चंद्रे बुधे नानाभियोगता ॥३ ॥ इति विद्यारंभः ॥ व्रते विवाहे ग्रह-

वर्षशुद्धिः कार्येति यत्नान्मुनयो वदंति ॥ साचैववर्षस्यच-
तुर्थभागं विहाय वर्षं किल केचिदन्ये ॥ ४ ॥ व्रतबंधे विवा-
हे वासरपरिकल्पमाहुराचार्याः ॥ आधानपूर्वगेके प्रसूतिः
पूर्वसदान्येपु(?) ॥५॥प्रायः पाणिग्रहणे वर्षविशुद्धि व्रतोपन-
यनेपि ॥ गर्भादिमाहुरेके मुनयो जन्मादिमपरे च ॥ ५ ॥
सत्यपराशरमुनयो गर्भादिमुदीरयंति वर्षाणाम् ॥ परिशुद्धिं
परिणयने व्रते जन्मादितथान्ये ॥ ७ ॥ प्रायः संस्करणं
प्राप्ते पंचमे हायने हितम् ॥ व्रतं गर्भाष्टमे कार्यमष्टमे नवमेपि
वा ॥ ८ ॥ गर्भाष्टमेऽष्टमेवाऽब्देपंचमे नवमेपि वा ॥
कार्य्यं विप्रस्य राज्ञस्तु दशाब्दे द्वादशे विशः ॥ ९ ॥ य-
उपनयनमाहुरिष्टं द्विजस्य गर्भाष्टमेऽष्टमे वाब्दे ॥ नोचे-
न्नवमे वर्षे शशिरविजीवेपु शस्तेपु ॥ १० ॥ गर्भाष्टमे भूति-
धनोतिरूपो वेदार्थनीतिनिपुणो नवमेष्टमे च ॥ प्रज्ञाविशेष-
विभवो भुवि पंचमे च सूतः कुलेपि विपुले सबलोधिक-
श्च ॥ ११ ॥ वर्षाणि यानि येषां तानि द्विगुणीकृतानीह ॥
नो सावित्रीपतनं विप्रादीनां भवत्येव ॥ १२ ॥ शस्तेशशिनि
सुरेज्येसवितरिशस्तेचमेखलाबंधः ॥ भवतिचिरायुर्विद्वानुक्ते-
संवत्सरेविप्रः ॥ १३ ॥ दिनकरशशिनौचेद्गोचरेशोभनेस्थेउद
गयनगतेर्केलग्नयोगेप्रशस्ते ॥ हरिवसुकरचित्रासौम्यपौष्णाधि-
शक्रासलिलपवनपुष्यामेखलाबंधनेष्टाः(?)॥ १४ ॥ मृदुध्रुवक्षि-
प्रचराश्वपूर्वादित्याच्युताद्रोऽनिलमूलसार्पैः ॥ मौंजीनिबंधं
प्रवदंतिसंतःसमस्तवेदाध्ययनेद्विजानाम् ॥ १५ ॥ हस्तात्रये

दैत्यरिपुदितीयेशर्केंदुपुष्याश्विनिरेवतीषु ॥ वारेषुशुक्रार्केबृहस्पतीनांहितानुबंधोद्विजमौंजिबंधः ॥ हस्तत्रयेतिष्यधनिष्ठयोश्चपौष्णाश्विशक्राऽदितिविष्णुभेषु ॥ शस्तेतिथौचंद्रबले नयुक्तेकार्य्यंद्विजानांव्रतबंधकर्म ॥ १६ ॥ शुक्लेपक्षेशुभस्थेशशिनिदिनकरेदेवपूज्येचसम्यग्वारेभानोःसितस्यत्रिदशपतिगुरावुक्तेचापिशुक्रे ॥ हस्ते चित्राश्विशक्रादितिवसुवरुणोपेंद्रपुष्येंदुपौष्णे स्वातीष्वप्याहतासु स्मृतमुपनयनं भार्गवाद्यैर्मुनींद्रैः १७। उत्तरायणगतेदिवाकरेवीर्यवत्सुगुरुचंद्रभानुषु ॥ क्षौरभेषुसकलेषुदेहिनांमौंजिबंधनविधिः प्रशस्यते ॥ १८ ॥ सप्तपराशरपूर्वैः क्षौरे कथितानि यानिभानीह ॥ सहदंडकाष्ठभंगे व्रतबंधे तानि शस्तानि ॥ १९ ॥ अनुकूले निशानाथे शुभस्थानस्थिते रवौ ॥ चूडाकरणवत्कार्या मेखलाबंधने स्थितिः ॥ २० ॥ क्षुरकर्मणि प्रदिष्टं यदिष्टफलदायकं दिनाद्यं तु ॥ तन्मेखलादिसौम्ये भवति हिताय द्विजातीनाम् ॥ २१ ॥ ताराचंद्रानुकूलेषु गृहाब्देषु शुभेष्वपि ॥ पुनर्वसौ कृतो विप्रः पुनः संस्कारमर्हति ॥ २२ ॥ माघे मासि महाधनो धनपतिः प्रज्ञाबलं फाल्गुने मेधावी भवति व्रतोपनयने चैत्रे चतुर्वेदवित् ॥ वैशाखे निखिलोपभोगसुखिता ज्येष्ठे वरिष्ठो बुधस्त्वाषाढेऽपि महामखप्रकरणप्राप्तप्रतिष्ठो भुवि ॥ २३ ॥ माघे द्रविणशीलाढ्यः फाल्गुनेऽपि दृढव्रतः ॥ चैत्रे भवति मेधावी वैशाखे कोविदो मतः ॥ २४ ॥ ज्येष्ठे गगननीति-

१ बुध इतिपाठान्तरम् ।

ज्ञस्त्वाषाढे ऋतुभाजनम् ॥ शेषेष्वपि च मासेषु निषिद्धं निशि च व्रतम् ॥ २५ ॥ प्राज्ञो भवेत्कमलबंधुदिने द्विजन्मा वेदार्थपालनपरो व्रतबंधनेच ॥ चांद्रे चिरं श्रुतिगुणैरपि जातजाड्यः कौजे व्रजेत्तनुमदेन विनाशमाशु ॥ २६ ॥ बोधोभियोगरहितो मतिमांश्च जीवे मिश्रीभवेदवनिपैः परिपूरितोऽपि ॥ पांडित्यमंडितकुलो विपुलोपभोगी वारे भृगोर्मरणमेति शनैश्वरस्य ॥ २७ ॥ मेधा भानुदिने जडः शशिरगोश्चंद्रात्मजे बोधता पंचत्वं कुजमंदयोर्भृगुसुते वाग्मी बलीयान्सुखी ॥ षट्कर्माऽभिरतः सुखी सुरगुरौ विद्वांश्चिरायुर्नरो धिष्ण्ये पापनिपीडिते अहिमगौ मूढो गतायुर्भवेत् ॥ २८ ॥ मेषे भवति रुजार्तो धीमान्गविरोगशोकपरिहीणः ॥ गदवान्मिथुनविलग्ने विधुरो दीनः कुलीरे च ॥ २९ ॥ करिकुलवैरिणि बलवान्विद्यावानेव योषिति क्रूरः ॥ सुभगः सुखोपभोक्ता तौलिनि किल नाशमुपयाति ॥ ३० ॥ धनुषि धनाढ्यः श्रीमान्मकरे च घटे धनैः परित्यक्तः ॥ षट्कर्माभिरतः स्यान्मीने धनवान्प्रवक्ता च ॥ ३१ ॥ भृगुगुरुशशिपुत्रे केंद्रसंस्थेश्च पापे रिपुसहजगृहाये सूर्यमाहेयमंदे ॥ वृषतुरगतुलायां सिंहमीने प्रशस्तं व्रतकरणमिहोक्तं नाष्टमस्थे शशांके ॥ ३२ ॥ उदयति मृदुभांशे मूर्खतादोऽध्यमार्के क्षितितनयनवांशे पापबुद्धिर्जडः स्यात् ॥ जडमतिरुडुपांशे सौम्यभावे पटुत्वं गुरुभृगुतनयांशे यज्ञभाग्यत्वमाहुः ॥ ३३ ॥ षट्कर्माभिरतस्स्याद्यज्ञसुरराजपूजितस्यांशे ॥ दीर्घायुरर्थपूर्णो गुणवान्भृगुजांशके विप्रः ॥ ३४ ।

लग्नेसौरिदिवाकराऽवनिसुतानाशंवधं। वधनं वित्ते वित्त-
विनाशमाशु सहजे नैरुज्यमिष्टागमम् ॥ बंधौबंधुविरोधमेव
तनये पुत्रक्षयं दुष्टभे सौभाग्यार्थसुखानि दारमरणं यच्छंति
जामित्रभे ।। ३५ ॥ निधनभवनसंस्था मृत्युमर्थप्रणाशं
तपसि विविधरोगान्धर्महानिं दिशंति ॥ वियतिरुचिर-
भोगांस्तीव्रवृत्तंतथायेसुबहुविविधलाभंरिष्यगेऽर्थप्रहाणम्(?)॥
॥ ३६ ॥ केंद्रस्थेऽमरमंत्रिणि प्रवरधीः पट्कर्मदीक्षास्थितो
विद्वान्सौख्यगुणान्वितोऽथ भृगुणासारांकितोधावकः ॥
काणेनांत्यजसेवको दिनकृता राजोपसेवी भवेद्भौमेनायुध-
वृत्तिरुज्ज्ञपतिना स्याद्वैश्यवृत्तिर्द्विजः ॥ ३७ ॥ षष्ठेऽष्टमे
शशधरे मरणं प्रयाति जीवे दिवाकरसुते विगुणोर्थहीनः ॥
क्रूरः कुजेन मृदुतां विगुणेऽलसश्च सौम्ये पटुर्गुरुवदिंदुभृगावि
कल्पौ ॥ ३८ ॥ लग्ने गुरौ भृगुसुते नवपंचमस्थे चंद्रे
सितांशकगतः खिलवेदवेदी ॥ मंदांशगेषु गुरुभार्गवभाधि-
पेषु वियार्थशीलरहितो भवति कृतघ्नः ॥ ३९ ॥
जीवोदये जीवगृहोदये वा जीवांशके जीवसमीक्षिते वा ॥
अल्पश्रुतोऽपि व्रतबंधनेषु वागीशतुल्यो भवति द्विजेंद्रः ॥
॥ ४० ॥ प्रशस्ते वाक्पतिगृहे तद्युक्ते वान्यवेश्मनि ॥
तद्देष्काणे नवांशे वा त्रिंशांशे चोदयांशके ॥ ४१ ॥ शा-
खाधिपतौ बलवति केंद्रे वर्णाधिपेच जीवे च॥शस्तो मौंजी-
बंधो बलहीनैः संकरोतिहितः ॥ ४२ ॥ ऋग्वेदाधिपति-
र्जीवो यजुर्वेदाधिपः सितः ॥ सामवेदाधिपो वक्रः शशिजो-

थर्ववेदराट् ॥ ४३ ॥ जीवसितो विप्राणांक्षत्रस्यारोप्णगू विशांचंद्रः॥शूद्राधिपः शशिसुतः शनैश्वरः संकरभवानाम् ॥ ॥ ४४ ॥ वसंतसमयेदध्यादब्दे गर्भाष्टमेपि वा ॥ मेधावी मेखलाबंधे जन्ममासेऽथ जन्मभे ॥ ४५ ॥ यज्वा वसंतसमये बहुवित्तभोगी गर्भाष्टमे विविधशास्त्रविशारदश्च ॥ वेदार्थपालनपरः खलु जन्ममासे ऋक्षेऽपि जन्मनि बहुक्रतुभाजनं स्यात् ॥ ४६ ॥ जन्मोदये जन्मसु तारकासु मासेऽथ वा जन्मनि जन्मचंद्रे ॥ वृत्तेन विप्रो न बहुश्रुतोऽपि प्रजाविशेषैः प्रथितः पृथिव्याम् ॥ ४७ ॥ गर्भाष्टमे गर्गपराशराद्यैः फलं यदुक्तं व्रतबंधनेषु ॥ ततोऽधिकं जन्मसु तारकासु मासेऽथवा जन्मनि मानवानाम् ॥ ४८ ॥ अस्तंगते दैत्यगुरौ गुरौ वा ऋक्षेऽपि वा पापयुतेप्यभुक्ते ॥ व्रतोपनीतो विबुधैः प्रणाशं प्रयाति देवैरपि रक्षितश्च ॥ ॥४९॥नष्टे जीवे तथा शुक्रे निरंशे चैव भास्करे॥उपनीतस्य विप्रस्य जडत्वं मृत्युमादिशेत् ॥ ५० ॥ पापेनोपहते ऋक्षे अनध्याये गलग्रहे ॥ वर्गे च प्रथमे चंद्रे न कुर्याद्व्रतकर्मच ॥ ५१ ॥ न भूरिग्रहभिन्नेभे न पापोत्पातपीडिते ॥ न रात्रौ न च संध्यायां नानध्याये गलग्रहे ॥ ५२ ॥ नो संध्यागर्जिते प्राहुर्व्रतोपनयनं हितम् ॥ नच विद्युत्प्रथमाकाले पष्ठ्यमासत्रवासरात् ॥ ५३ ॥ अकालगर्जितस्यादौ पर्वण्याशौचकादिषु ॥ नानध्यायेषु वै कुर्यादुपरागदिने तथा ॥ ५४ ॥ अनध्यायाश्च संख्याता हेमंते चतुरष्टकाः ॥ एको विद्दीनसंध्यायां (१) द्वितीयायां मनीषिभिः ॥ ५५ ॥

मार्गशीर्षादिमासेषु चतस्रः कृष्णपक्षजाः॥क्रमशस्तिथयस्तिस्रः सप्तम्यस्याहुरष्टका ॥ ५६ ॥ पौषादिविधुमासेषु कृष्णे चैवाष्टकात्रयम् ॥ एकाज्ञेयाश्विने मासे हायन्यश्चतुरष्टकाः ॥ ५७ ॥ अष्टकाश्च समाख्याताः सप्तम्यादितिथित्रये॥ नाधीयीतात्र शास्त्राणि व्रतबंधं च वर्जयेत् ॥ ५८ ॥ एको विंद्धि द्वितीयायां प्रेतपक्षे गते च या ॥ याचको जागरे जाते चैत्रावल्यापरेऽपि च (?) ॥५९॥ चातुर्मास्यसमाप्तौ च द्वितीयायां भवेत्तथा ॥ सर्वास्वेतासु नाध्यायाः पुराणे परिकीर्तिताः ॥ ६० ॥ अष्टमी हंत्युपाध्यायं शिष्यं हंति चतुर्दशी ॥ अमावास्योभयं हंति प्रतिपत्तु न कीर्त्तयेत् ॥६१॥यथायौधिष्ठिरीसेना गांगेयशरपीडिता ॥ प्रतिपत्पाठशीलस्य विद्येव तनुतां गता ॥ ६२ ॥ आरंभादुत्तरं यत्र प्रत्यारंभो न सिध्यति॥गर्गादिमुनयः सर्वे तमेवाहुर्गलग्रहम् ॥ ॥ ६३ ॥अष्टमी सप्तमीविद्धा त्रयोदश्यां चतुर्दशी ॥ प्रतिपद्वितीयाविद्धा गलग्रह उदाहृतः ॥६४॥ वागीशशुक्रयोरस्ते कृष्णपक्षे गलग्रहे॥अनध्यायेपराह्णे च नकुर्यान्मौंजिबंधनम् ॥ ॥ ६५ ॥ त्रयोदश्यादिचत्वारि सप्तम्यादिदिनत्रयम् ॥ चतुर्थी ह्येकतः प्रोक्ता अष्टावेते गलग्रहाः ॥ संध्यायां गर्जिते देवे शास्त्रचिंतां करोति यः॥चत्वारि तस्य नश्यंति आयुर्विद्यायशो बलम् ॥ ६७॥दयात्राकालवर्षे च व्रतोपनयनं बुधः॥ नानध्याये न भूकंपे न निर्घाते गलग्रहे ॥ ६८ ॥ मार्गस्य

१ प्रतिपत्पाठनाशिनी–इतिपाठान्तरम् ॥

पूर्णामावास्यादावष्टकातामकालजाम् ॥ पृष्टंकेचिदिदं प्राहुर्मघौमाघेचफाल्गुने ॥ ६९ ॥ पौषादिचतुरो मासान्वृष्टा वृष्टिरकालजा ॥ व्रतं यात्रादिकं तत्र वर्जयेत्सप्तवासरान् ॥ ॥ ७० ॥ वृष्टिरकालप्रभवा चतुर्षु मासेषु पौषपूर्वेषु ॥ आसप्ताहं त्याज्यं व्रतमथ यात्रादिकं तत्र ॥ ७१ ॥ मार्गान्मासात्प्रभृति मुनयो व्यासवाल्मीकिगर्गा यात्राचूडाव्रतकरण विधौ वृष्टिदोषं वदन्ति ॥ नाडीजं वा सुरपतिगुरू वक्रदृष्टेरकालं मासावेतावशुभफलदौ मार्गपौषौ न शेषाः ॥७१॥यावद्भूयाज्जलधितनयाचुंबनायासखिन्नोदेवो दैत्यप्रमथनपटुर्यावदेकांतशांतः ॥ अंगःशय्यापरिगततनुर्योगनिद्रामुपेतस्तावद्दृष्टो भवति समयो ब्रह्मणो भाषितेन ॥ ॥ ७२ ॥ वृष्टिः करोति दोषं तावन्नाकालसंभवा राज्ञः ॥ यावन्न भवति यातुर्वर्त्मनिचरणांकिता वसुधा ॥ ७३ ॥ गृहे रवींद्वोर्भवति प्रकंपे केतूद्गमोल्कापतनादिदोषैः ॥ व्रते दशाहानि वदंति तज्ज्ञास्त्रयोदशाहानि वदंति केचित् ॥ ॥ ७४ ॥ उद्वाहमाहुः शुभमंगनानामेकाहमेव व्रतबंधने तु ॥ द्व्यहं विहाय ग्रहणे नराणां सदैव सप्ताहमपि प्रयाणे ॥ ७५ ॥ एकरात्रं परित्यज्य कुर्य्यात्पाणिग्रहं गृहे ॥ सप्तरात्रं प्रयाणे तु त्रिरात्रं व्रतबंधने ॥ ७६ ॥ अब्दे विशुद्धेषु न शोभनेषु दिनेशवागीशनिशाकरेषु ॥ हारीतमांडव्यपराशराद्यैर्नृदृष्टिदृष्टो द्विजमौंजिबंधः ॥ ७७ ॥ केसरिगे सुरसचिवैदैवाद्व्रतपरिणयौ

यदा भवतः ॥ व्रतबंधे व्रतभंगोऽथविवाहे योषितां मृत्युः ॥ ७८ ॥ ऋजुरनुपहतो दीनः सुश्लिष्टो ब्राह्मणस्य पालाशः ॥ राज्ञश्चौदुंबरजो वैश्यस्य तु बिल्वसंभवः प्रोक्तः ॥ ७९ ॥ केशललाटघ्राणप्रमाणकानि त्वभीष्टफलदानि ॥ क्रमशो विप्रक्षत्रियवैश्यानां दंडकाष्टानि ॥ ७९ ॥ इति व्रतबंधपटलः ॥ आरभ्य जन्मसमयाद्युवतेर्विवाहमोजाब्दकेषु मुनयः शुभमादिशन्ति ॥ आधानतःप्रभृतिचासमवत्सरेषु प्रोक्तस्तयोर्न शुभदस्तु विलोमवर्षे ॥ ८० ॥ अयुग्मेऽविधवा नारी युग्मे च विधवा भवेत् ॥ तस्माद्गर्भान्विते युग्मे विवाहे सा पतिव्रता ॥ ८१ ॥ मासत्रयादूर्द्ध्वमयुग्मवर्षे युग्मे तु मासत्रयमेव यावत् ॥ विवाहशुद्धिं प्रवदंति सर्वे राश्युद्गमो ज्योतिषि जन्ममासात् ॥ ८३ ॥ युग्माष्टमासयुवतेरपि जन्ममासान्मासत्रयं विवहने परमाब्दशुद्धिम् ॥ प्राहुः समस्तमुनयो विषमे तु वर्षे मासत्रयादुपरि तद्भवजन्ममासात् ॥ ८४ ॥ आदौ मासत्रयं नेष्टं युग्मसंवत्सरस्य च ॥ परतो वर्षशुद्धिश्च गर्भमासान्विता शुभा ॥ ८५ ॥ ग्रहाब्दशुद्धौ शुभदो विवाहो हीनेन हीनः कथितोऽगनानाम् ॥ शुद्धापकर्षेण खगादिशुद्धौ शुभे खगे वत्सरशुद्धिशेषम् ॥ ८६ ॥ ग्रहवत्सरसंशुद्धौ विवाहं शुभदं जगुः ॥ अन्यथा ग्रहशुद्धौ वा न वर्षे केवले शुभे ॥ ८७ ॥ गृहवत्सरशुद्धिश्च नार्त्तकालमपेक्षते ॥ स्वस्थे सर्वमिदं चिंत्यमित्याह भगवान्भृगुः ॥ ८८ ॥ चतुर्भिः षड्भिरष्टाभि-

देशद्वादशभिस्तथा ॥ अब्दैर्विवाहिता कन्या प्रतिष्ठां नैव गच्छति ॥ ८९ ॥ द्वादशे दशमे वाऽब्दे चतुर्थे वा चतुर्दशे ॥ अब्दाष्टमे द्वितीये वा कन्यकोढा प्रशस्यते ॥ ९० ॥ करोति वैधव्यकरोऽतिशोकं दौर्भाग्यमात्यंतिकमर्थनाशम् ॥ युग्मे च वर्षे विहिते विवाहे न कन्यका वृद्धिमुपैति कापि ॥ ॥ ९१ ॥ अष्टवर्षा भवेद्गौरी दशवर्षा तु कन्यका ॥ संप्राप्ते द्वादशे वर्षे परतस्तु रजस्वला ॥ ९२ ॥ संप्राप्ते द्वादशे वर्षे कन्यां यो न प्रयच्छति ॥ मासि मासि रजःप्राप्तौ पिता पिबति शोणितम् ॥९३॥ माता चैव पिता चैव ज्येष्ठभ्राता तथैव च ॥ त्रयस्ते नरकं यांति दृष्ट्वा कन्यां रजस्वलाम् ॥९४॥ वर्षाष्टमे मृत्युमुपैति कन्या वंध्याथवा विघ्नकरी वरस्य॥स्याद्वादशे वित्तविवर्जिता च पाणिग्रहे तौ परिवर्ज्जनीयौ ॥ ९५ ॥ यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः ॥ असंभाष्यो ह्यपांक्तेयः स विप्रो वृषलीपतिः ॥ ॥ ९६ ॥ राजग्रस्तेऽथवा युद्धे पितॄणां प्राणसंशये ॥ अतिप्रौढा तु या कन्या न तु कालं प्रतीक्ष्यते ॥ ९७ ॥ अतिप्रौढा तु या कन्या कुलधर्मविरोधिनी ॥ अविशुद्धापि सादेया लग्नचंद्रबलैर्विना ॥ ९८ ॥ विवाहोत्तरपक्षेषु अंतरामृतसूतके ॥ पूर्वं संकल्पितं द्रव्यं दीयमानं न दुष्यति ॥ ९९ ॥ इतिविवाहे वर्षशुद्धिः ॥ लोकाचारस्तावदादौ विचिंत्यो दशे देशे या स्थितिः सैव कार्य्या॥लोके दिष्टं पंडिता वर्ज्जयंति दैवज्ञोऽतो लोकमार्गेण यायात्४००॥

कुलस्य देशस्य च चित्तवृत्तिर्न खंडनीया विदुषा कदाचित् ॥ दोषं गुणं वापि गुणं च दोषं यो भावयेज्ज्यौतिषिकः सचाज्ञः॥१॥ बृहस्पतौ गोचरशोभनस्थे विवाहमिच्छंति हि दाक्षिणात्याः ॥ रवौ विशुद्धं प्रवदंति गौडा न गोचरा मालवके प्रमाणम् ॥२॥ भौमे विशुद्धे यमुनातटोद्भवा हिमालयस्थाः शशिनः शुभर्क्षे ॥ इतिदेशाचारः ॥ त्रिषड्दशैकादशगो दिनेशः सुतार्थसौभाग्यसुखप्रदः स्यात् ॥ वैधव्यदाताष्टमराशिसंस्थः शेषे रुजं दुःखशुचं करोति ॥ २ ॥ जन्मनि भानोर्विधवापतिसुतयुक्ताभवत्युपचयर्क्षे॥शेषगृहस्थे कन्यानाशः कन्यातुरा नूनम् ॥४॥ जन्मन्यर्थेच नारी भवति सविधवा वित्तहीना द्वितीये निःस्वा पातालसंस्थे तदनु हतसुता सप्तमे नष्टकामा ॥ मृत्यौ प्राप्नोति मृत्युं व्ययनवमगृहे रोगशोकौ क्रमेण शेषे राशौ विवाहे विपुलधनवती सौख्यमानार्थयुक्ता ॥ ५ ॥ वंध्या चार्थविवर्जिताथ मुदिता दौर्भाग्यदुःखातुरा स्वल्पाऽपत्यवती पतिप्रियतमा बंधुच्युता बंधकी ॥ निःस्वा सौख्यसमन्विता सुतधनप्रीत्यन्विता निःसुखा व्यूढाऽनुक्रमशः प्रचण्डकिरणे जन्मादिराशिस्थिते ॥ ६ ॥ आये रोगभयं धने निधनता नष्टप्रजा पंचमे पाताले मदविह्वला पररता कामे विमार्गस्थिता ॥ भर्ता नाशमुपैति चाष्टमगते कन्या क्षयं चाष्टगे प्रभ्रष्टा नवमे ध्रुवं दिनपतौ शेषेषु शस्तं जगुः ॥ ७ ॥ द्वितीयपुत्राह्वयगः प्रभाकरस्त्रयोदशाहात्परतः शुभप्रदः॥अन्तिया( ? )दशादिवसात्परोत्रतबंध

नायेषु ॥ ८ ॥ रविरशुभराशिस्थःशुभराशिंगमिष्यत्त्यक्त्वात्र योदश(?)॥भौमः पंचदशाहानि मासार्द्धादधिकं बुधः॥श्रेष्ठामासश्च वागीशो दिनमेकं निशाकरः ॥ ९ ॥ मंदो मासोत्तरं वर्षं सितः पादोनमासकम् ॥ यावदस्युदितास्तिष्ठेत्तावत्तावत्फलं शिखी ॥ १० ॥ अशुभराशिगे सूर्ये शुभराशिपुरोभवेत् ॥ त्रयोदशदिनं त्यक्त्वा शेषं च शुभमादिशेत्॥ ११ ॥त्रयोदशदिनान्यर्कः कुर्यात्सौख्यं च भूमिजः ॥ बृहस्पतिर्मासानष्टौ वत्सरं चार्कनंदनः ॥ १२ ॥ सार्द्धदिनं तुशीतांशुर्मासैरेकादशैस्तमः ॥ प्रवेशे चाशुभाः सर्वे बुधशुक्रौ दिनद्वयम् ॥ ॥ १३ ॥ इति विवाहशुद्धिः ॥ जन्माष्टगो द्वादशगः सुरेज्यो वैधव्यकृत्त्विष्ट (?) ॥ दौर्भाग्यदाता दशमश्चतुर्थः शेषेषु सौभाग्यसुतार्थकृत्स्यात् ॥१४ ॥ जन्माष्टमांत्यभवनेषु पतिप्रणाशं कन्याक्षयं हि सहजारिगतः करोति ॥ जीवश्चतुर्थदशमश्चिरदुर्भगत्वं सौभाग्यवित्तसुखदः परिशेषभेषु ॥ १५ ॥ जन्माष्टांत्यगृहस्थितेन गुरुणा भर्तुर्विनाशो ध्रुवं षष्ठस्थे तु चिराद्भवेच्च विधवा कन्या तृतीये न तु ॥ दौर्भाग्यं दशमास्थितेन नियतं (?) स्वाचतुर्थस्थितेशेषस्थेनचिराद्भवेत विधवा पुत्रार्थसौख्यान्विता ॥१६॥द्वादशदशमचतुर्थे जन्मनि षष्ठाष्टमे तृतीयेच॥प्राणिग्रहतिगृहस्थेजीवे वैधव्यमाप्नोति॥१७॥स्वोच्चेगुरौस्वभवनेभवनेऽथमित्रे मित्रांशके स्वभवनोच्चगतांशकेषु॥ कामान्यजन्मनिधनेऽपिचतुस्त्रिकेऽपि पुत्रार्थसौख्यपतिवृद्धिकरो विवाहे ॥ १८ ॥ उच्चस्थःस्वगृही सुहृद्भवनगो वाचस्प-

नित्यशः पूर्णायुर्विविधार्थसौख्यजनको जन्माष्टगो वा भवेत्।
नीचस्थोरिगृहेदिवाकरकरस्थाप्यानुगामीचतद्दृष्टो नष्टफलं द-
दाति नियतं वैधव्यपुत्रापदम्॥१९॥इतिबृहस्पतिशुद्धिः॥
आयेवैभवनाश्रये च विधवा सौम्येयाम्ये स्मृता शेषेषु क्षय
दोषशोकमरणं व्याध्यादनिष्टं बहु ॥ प्रीतिर्जन्मभसु तारकासु
परतः संज्ञानुरूपं फलं चंद्रेचोपयमायसप्तमगते सौभाग्य-
सौख्यास्पदः ॥ २० ॥ जन्मत्रिषट्सप्तदशायगोऽपि श्रेष्ठोऽष्ट-
मस्थे निधने विधत्ते ॥ वंध्यात्वमद्वादशपंचमस्थेशेषेषु दौर्भा-
ग्यरुगादिकारी ॥ २१ ॥ वैधव्यमेति निधने निधनं चतुर्थे
चंद्रे चिरंजसुतधर्मधनं व्ययस्थे ॥ वैधव्यदुःखगदरोगभयानि
कन्या प्राप्नोति शेषभवनेषु सुतार्थसंपत् ॥ २२ ॥ दिवाकरें
दूदशषट्तृतीयभूतपुत्रार्थवधूसुखप्रदो ॥ भवेदुपाक्चनुसप्तम
स्थः शशीप्रशस्तः सविता तयोर्न तु ॥ २३ ॥ वैधव्यबं-
धनकरौ निधनप्रयातौ दौर्भाग्यदुःखजनकौ द्विचतुर्थसंस्थौ ॥
क्षुत्कासदौ नवमगौ धनहानिदौ च वंध्यात्वबंधनकरौ सुतिरिष्ट-
गौच ॥ २४ ॥ तारानुकूलफलदः शुभदः स्ववर्गस्वोच्चेऽपिशी
तकिरणः सुहृदंशभागे॥शस्तोऽष्टवर्गपरिशोधितगोचरेण पक्षा-
दिशुद्धिविपरीतविशुद्धिशुद्धिः॥२५॥सप्तमायदशषट्त्रिजन्मगो
नेष्टदोद्विनिधनोपगैर्ग्रहैः॥ बंधुरिष्फनवपंचमास्थितैः स्वेष्टदोय-
दिविलोमवेधगः ॥ २६ ॥ जन्मत्रिषडेकादशसप्तमस्थोपि
नेष्यतेचंद्रः ॥ पंचमनवांत्याष्टचतुर्द्विवेधगोवामदृष्टफलः ॥
॥ २७ ॥ जन्मराशिगतश्चंद्रो जन्मतः पंचमो ग्रहः॥ स्थितो

यदा तदाचेंदुर्वेधगो विफलःस्मृतः ॥ २८ ॥ पंचमस्थानगश्चंद्रो जन्मराशिगतो ग्रहः॥यदा तदा विपर्यस्तो वेधगः शुभदः स्मृतः ॥ २९ ॥ यस्य गोचरफलप्रमाणता तस्य वेधफलमिष्यते नवा॥प्रायशो न बहुसंमतं त्विदं स्थूलमार्गफलदो हि गोचरः ॥ ३० ॥ होराराशावपचयगते जन्मभे वापि वासो हानिर्हीनादुडुगणपतो वृद्धिरापूर्यमाणे ॥ पक्षस्यादावुपचयगते हानिरापूर्यमाणे वृद्धिमुक्त्वाह्नसति हिमगो कृष्णपक्षादिसंस्थे ॥ ३१ ॥ सितपक्षादौ चंद्रे शुभेशुभं पक्षमशुभम शुभे च ।। कृष्णेगोचरशुभदो न शुभपक्षः शुभतोऽन्यः ॥ ॥ ३२॥ उपचयगृहयुक्तःसव्यगः शुक्लपक्षे शुभमभिलषमाणः सौम्यमध्यस्थितो वा ॥ रविशशिगृहयुक्तः कारकेंऽपि चेंदुर्जयसुखधनदाता तत्प्रहर्तान्यथास्थः ॥ ३३ ॥ आश्रित्य चंद्रस्य बलानि सर्वे ग्रहाः प्रयच्छंति शुभाशुभानि॥ मनःसमेतानि यथेंद्रियाणि कर्मण्यतां यांति न केवलानि ॥ ३४ ॥ चंद्रबलेन विहीनो न मनःपरितोषदः क्रियारंभः ॥ अन्यगुणैरपि युक्तो जरीव रमणो नहि स्त्रीणाम् ॥ ३५ ॥ क्रकचोमृतयोगश्च दिनंदग्धंतथैवच ॥ चंद्रे शुभे क्षयं यांति वृक्षा वज्रहता इव ॥ ३६ ॥ चंद्रेशुद्धिगोचरे वा वेधे पक्षादिकेपिवा ॥ शुभे शीतकरे कुर्य्याद्यात्रापाणिग्रहादिकम् ॥ ॥ ३७ ॥ अष्टवर्गपरिशोधितः शशी श्रेष्ठतां समनुवर्त्तते सदा ॥ जन्मगोपि हि तदा प्रशस्यते योष्टवर्गशुभदः सशोभनः ॥ ३८ ॥ अष्टवर्गविशुद्धेषु गुरुशीतांशुभानुषु ॥

व्रतोद्वाहौ च कर्तव्यौ गोचरे न कदाचन ॥ ३९ ॥
गर्गव्यासपराशरादिमुनिभिर्मार्गावुभौ कीर्तितावेको गोचरगोष्टवर्गविहितश्चान्यस्तयोर्गोचरः ॥ चूडायां व्रतपाणिसंयतिविधौ प्रोक्तोष्टवर्गः पुनर्यात्रायामपि पूजितो मतमिदं सत्यस्य जीवस्य च ॥ ४० ॥ विवाहयात्राव्रतपुंविधानं कुर्याद्ग्रहैर्गोचरशोभनस्थैः ॥ नित्यं जयार्थी तु जवोष्टवर्गे संशोधितस्तैर्विदधीत यात्राम् ॥ ४१ ॥ अष्टवर्गेण ये शुद्धास्ते शुद्धाः सर्वकर्मसु ॥ अविशुद्धा न शुद्धाः स्युर्निर्दिष्टा यवनादिभिः ॥ ४२ ॥ महाष्टवर्गसंशुद्धाःखे ग्रहास्ते शुभप्रदाः ॥ व्रतोद्वाहे च गमने शस्ते नेष्टफलप्रदाः ॥ ४३ ॥ सूक्ष्माष्टवर्गसंशुद्धिः स्थूला शुद्धिस्तु गोचरे ॥ तस्माद्गोचरमुत्सृज्य फलमष्टकवर्गतः ॥ ४४ ॥ योष्टवर्गपरिशुद्धिवीर्यगः सःशुभाशुभफलप्रदो ग्रहः ॥ योषितांपरिणये विशेषतो गोचरेऽन्यतरतारमात्रके ॥ ४५ ॥ यथोदये चंद्रमसः प्रकाशो दिनं गतानां सुखकैरवस्य ॥ तथाष्टवर्गग्रहलग्नशुद्धौ कार्यस्य पुंसां भवतीति शुद्धिः ॥ ४६ ॥ अभावता गोचरशोभनानां शुद्धिं वदेद्वागुरिरष्टवर्गात् ॥ वैधव्यकन्याक्षपयेत्तु योगे जन्माष्टवर्गस्य वदेन्न शुद्धिम् ॥ ४७ ॥ तारास्तु जन्मसंपत्प्रत्यरिक्षेमायशुभकष्टाः ॥ मित्रातिमित्रसंज्ञाश्चैताः संज्ञानुरूपफलाः ॥ ४८ ॥ सर्वकार्येषु(?)तारास्तिस्रोऽशुभप्रदाः ॥ पंचमी च समाख्याता मध्यमा मुनिपुंगवैः ॥ ४९ ॥ तारा विपज्जन्मविनाशसंज्ञा (?) पिलास्तु तिस्रो भयदाः प्रदिष्टाः ॥

प्राज्ञैः प्रमादादपि नाभियोज्याः क्षौरे प्रयाणे व्रतपौष्टिकेषु ॥ ५० ॥ स्नानाभिषेकव्रतमंगलानि विवाहविद्यादि तथोपदेशाः ॥ एते प्रशस्तास्त्रिपु जन्मभेषु विहाय यात्रां क्षुरकर्म भेषजम् ॥ ५१ ॥ सर्वमंगलकार्य्याणि त्रिषु जन्मसु कारयेत् ॥ विवाहस्वेदभैपज्यं यात्रां क्षौरं च वर्जयेत् ॥५२ ॥ जन्मर्क्षपरिणीता स्यात्कदाचिद्भर्तृवल्लभा॥ अध्यात्मकर्मणो(?) नूढासततं पतिवल्लभा ॥ ५३ ॥ जन्मर्क्षगे प्रमुदिता भर्त्तारं चाभिनंदते कन्या ॥ धनधान्यभूषणयुता भवनेऽतिसंपत्करे शशिनि ॥ ५४ ॥ उद्वेगकलहरोदनविभ्रमशीला विपत्करीज्ञेया ॥ क्षेमप्रसन्नहृदया विगतभया रोगहीना च ॥ ५५ ॥ प्रत्यरिगे बलशोभावैराग्यभृता कलहरोगसंतप्ता ॥ आज्ञाप्रसिद्धकारी सुमनोन्यासाधके भवति ॥ ५६ ॥ रोगो जन्मसु तारकासु कथितः कार्यप्रणाशोचिरादारोग्यं द्रविणं च वांछितफलं चायुः सदा संपदि॥ताराया विपदो भवंति विपदि प्रारब्धकार्यक्षयः क्षेमारोग्यधनप्रसादमुदितः क्षेमाविधेयास्वपि ॥ ५७ ॥ पंचम्यामचिरं मनोतितरलं कार्यं प्रसिद्धं प्रति स्त्रीवस्त्रद्रविणं प्रमोदमतुलं प्राप्नोतिपष्ठ्यामपि ॥५८ ॥ सप्तम्यामपिशोकनाशमशुभं नानागदव्याहतीरष्टम्यां धनधान्यसौख्यविजयानेवं नवम्यामपि ॥ ५९ ॥ भवति तदा दिवसार्यं शिवमथअशिवाय सर्वदा सर्वम् ॥ विपदपि नैधनसंज्ञा भवति हि तारा यदा दिवसे ॥ ६० ॥ नैधनगे बहुदुःखा निधनं समुपैति शोचिता

पत्या ॥ प्रियदर्शनासुरूपा मैत्रे पत्युः प्रियाचैव ॥ ६१ ॥ परमे मैत्रे सुभगा पतिदयिता विगतरोगरिपुभीतिः ॥ सितपक्षे शुभफलदोऽथविपतारास्वपि शशांकः ॥ ६२ ॥ पापाख्यात्रि विधायं चतुर्दशविंशतिस्त्रियता(?)॥ सिद्धिफलाकरी(?) विंशति संज्ञाःक्रमात्कथिताः ॥ ६३ ॥ सिद्धिदा वृद्धिदा चैव मृत्युदा च विशेषतः ॥ प्रत्यरिनाम तारा सा त्रिप्रकारा प्रकीर्त्तिता ॥ ६४ ॥ इतिताराशुद्धिः ॥ वासोवर्षमनोजमिच्छति तथा रैभ्योऽयनं चोत्तरं स्त्रीनाशादरिमंविहाय मुनयो मांडव्यशिष्या जगुः॥ चैत्रंप्रोज्झ्यपराशरः कथयति पौषंच दौर्भाग्यदमाषाढादिचतुष्टयं न शुभदं किंचित्प्रदिष्टं शुभैः ॥ ६५ ॥ मंगलेषु विवाहेषु कन्याया वरणेषु च ॥ प्रशस्तमासाः शस्यंते चैत्रपौषविवर्जिताः ॥ ६६ ॥ ऊढा दक्षिणमार्गगे दिनपतौ नैव प्रतिष्ठां व्रजेत्कन्येत्याह समस्तशास्त्रनिपुणो रैभ्यो मुनीनां वरः ॥ साध्वित्युत्तरमार्गगे सुतधना येतान्विहायापरे चैत्रं पौषयुतं हरेश्च शयनं शेषं जगुः शोभनम् ॥ ६७ ॥ मांडव्यशिष्यैः शुचिपूर्वमासाः पंचैव नेष्टा युवतेर्विवाहे ॥ दौर्भाग्यदुःखाप्रजतासहिष्णुदुःखानिनिन्द्यं क्रमशो भवंति ॥ ६८ ॥ आषाढे धनधान्यभोगरहिता नष्टप्रजा श्रावणे वेश्या भाद्रपदेऽश्विने च मरणं दुःखार्दिता कार्त्तिके ॥ पौषे प्रेतवती वियोगबहुला चैत्रे सदोन्मादिनी तन्वंगेषु विवाहिता सुतवती नारी समृद्धा भवेत् ॥ ६९ ॥ नोत्पातपापदिवसे च तिथौ च रिक्ते

नास्तंगतेमरगुरौ भृगुनंदने च ॥ संधौ नवत्त्वेयनयोर्न च राहुकेतुसंदर्शने किल विवाहविधिर्विधेयः ॥ ७० ॥ हरौ प्रसुप्ते न च दक्षिणायने न चैत्रमासे न च पौषसंज्ञिते॥ तिथौ च रिक्ते शशिनि क्षयं गते रवींदुभौमार्किदिनेषु चास्तम् ॥ ७१ ॥ कन्यायां कर्कसंस्थे मिथुनहरिगृहे केचिदाहुर्मुनींद्रा मेषे चापे च राशौ दिवसपतियुते सिंहसंस्थे च जीवे ॥ केचित्सुप्ते च देवे दिनकरकिरणैर्लुप्तशुक्रप्रकाशे विद्यारंभं विवाहं सुरवरभवनं नैव कुर्य्याद्गृहं च ॥ ७२ ॥ व्यतीपाते तिथौ रिक्ते क्रूराहे वैधृतौ तथा ॥ चैत्रे पौषे तथा विष्टयां नोद्वाहं कारयेद्बुधः ॥७३॥ इति मासादिशुद्धिः॥ दंपत्योर्दिनवाररराशिरहिते तारानुकूले रवौ चंद्रे चार्कि-कुजार्कशुक्रवियुते मध्येथवा पापयोः ॥ त्यक्त्वा च व्यतिपातवैधृतिदिनं विष्टिं च रिक्तां तिथिं क्रूराहानथ पौषचै-त्ररहिते लग्नांशकेनायुषे ॥७४॥ त्यक्त्वा चैत्रमुदक्प्रचारिणि रवौ मार्गे च मासे मिथः स्त्रीपुंसोर्दिनवाष्टराशिरहिते योपि-च्छुभे भास्करे ॥ लग्नाद्वांशुमतश्च सप्तमगृहे शून्ये विवाहः शुभः कुर्य्यान्न व्यतिपातवैधृतिदिने नो विष्टिदुष्टेऽहनि ॥ ७५ ॥ अर्केऽनुकूले शशिनि प्रशस्ते ताराबले चंद्रविवृ-द्धिपक्षे ॥ अयुग्मवर्षे विहिते विवाहे पुत्रादिभिर्वृद्धिमुपैति नित्यम् ॥ ७६ ॥ यद्यपि सुरगुरुसूर्य्यौ शस्तौ कथितौ विवाहयोगे तु ॥ सकलगुणोदययुक्ताभावाशुद्धिःपरा गा-ढे ॥ ७७ ॥ शुद्धिं विलोक्य खलु वर्षदिनेश्वराणां

प्राहुः प्रशस्तमखिलं विधिवद्विधाय ॥ स्त्रीपुंसयोः शुभदिने समुहूर्तलग्ने नक्षत्रयोजनविधिः शुभकृत्तयोः स्यात् ॥ ७८ ॥ अन्योऽन्यतो द्विनवनैधनगश्च नेष्टो निःसम(?)जामरणवैरिवियोगदोषः॥ द्विद्वादशे निधनताऽप्रजतात्रिकोणे (?) ॥ ७९ ॥ प्रीतिः परा निगदिता समसप्तके च शेषेष्वनेकविधिसौख्यसुतार्थसंपत् ॥ द्विद्वादशे भवति वित्तविहीनता च सौभाग्यसौख्यमपरे च सुतार्थतापि ॥ ८० ॥ मरणं चैव वियोगो विधवाषट्काष्टके पराऽभिरता ॥ अनपत्यता त्रिकोणे द्विर्द्वादशे तु दारिद्र्यम् ॥ ८१ ॥ त्रिकोणषट्काष्टधनव्ययेषु पापं प्रदानं शुभमन्यभेषु ॥ आपाढपूर्वेण चतुष्टयेन कार्य्योविवाहो न च चैत्रपौषे ॥ ८२ ॥ दशमं चतुर्थयोगे भवति युवत्या धनं च पुत्राश्च ॥ समसप्तकेपि नित्यं बहुपुत्रत्वं सुखं चैव ॥ ८३ ॥ एकादशे तृतीये कुलवृद्धिर्भवति चाशुनियमेन ॥ राश्यैक्येनसुतार्थप्रीतिः स्वर्क्षेण धनलब्धिः ॥ ८४ ॥ षड्डाष्टकेच भवनाधिपमित्रभावमेकाधिपत्यमवलोक्य वरस्य राशिम् ॥ कामं विवाहसमयः शुभकृन्नराणां तारा भवेद्यदि परस्परतोऽनुकूला ॥ ८५ ॥ मरणं तारविरोधे ग्रहरिपुभावे चिरवियोगः ॥ नरनार्य्योः षट्काष्टके वैरमवश्यं तदाराश्योः ॥ ८६ ॥ सौहार्दे शुभयो(?)श्चाऽपि तयोरेकाधिपत्येपि च तारामित्रसुमित्रजन्मशुभदा क्षेमा च संपत्करी॥ षट्काष्टे व्ययधने(?) योगेऽपि पुंयोषितोः प्रीत्यायुः सुतवृद्धिचित्तजनकःकार्य्यो विवाहस्तदा ॥ ८७ ॥ एका-

धिपत्ये चतयोः सुहृत्त्वे राशिर्वशित्वे च भवेद्विवाहः॥ द्विपंच-
षड्राशिगतेऽपियोगे तारा विनष्टेनृविरोधमेति ॥ ८८ ॥
चित्रादियोगेऽपि षडष्टकादौ ताराविपत्प्रत्यरिनैधनाख्या ॥
वर्ज्या विवाहादिषु कीर्त्तिता च प्रीतिः परा जन्मसु तारका-
सु ॥८९॥ भुजनवदशैकादशनागेंद्रधनभेंदुनपुनाधिष्ण्येषु(?) ॥
नक्षत्रेषु च तारा भवंति परस्परविशुद्धाः ॥ ९० ॥ गोकन्या-
मकरैर्नृयुग्घटघटैःकीटाब्जमीनैरपि स्यात्सिंहाजधनुर्धरैर्नवसुतै-
रन्योन्यतो राशिभिः ॥ कष्टामित्रविपत्करा(?)पुरहितैर्योगा-
स्तवोद्वाहिता पुत्राणां सुचिरायुषां च जननी वित्तान्विता
कन्यका ॥ ९१ ॥ सिंहाजवाजिभिरथालिकुलीरमीनैः क-
न्यामृगास्यवृषभैर्घटतौलियुग्मे॥ जन्मादितारकशुभैर्नवपंचमा-
ख्यैर्नारीप्रभूतसुतवित्तसुखान्वितास्यात् ॥ ९२ ॥ चापा-
लियुग्मे घटभून्मृगेषु कर्केजके सिंहकुलीरगे च ॥ जूकातु-
लायां वृषभे नृयुग्मे द्विर्द्वादशेपार्थकरा युवत्याः ॥ ९३ ॥
सिंहःकुलीरेण मृगेण कुंभस्तौलिःस्त्रिया चापधरेण कीटः ॥
विसारिणाजो वृषभे नृयुग्मं द्विर्द्वादशे भूरिधनप्रदाः स्युः ॥
॥९४॥ मकरः करिकुलरिपुणा योषा मेषेण झषस्तुलया ॥
घटकर्कटौ वृषधनुषी अलिमिथुनौ च वैरविधौ ॥ ९५ ॥
मकरसकेसरिमेषयुवत्या सहमीनकुलीरघटे वा ॥ धनुर्वृष-
वृश्चिकमन्मथगामी मरणकराश्च षडष्टकयोगाः॥९६॥ मकर-
सनाथं मिथुनं कन्याकलशौ मृगेंद्रमीनौ च ॥ वृषभघटावलि-
मेषौ चापकुलीरौ च मित्रविधौ ॥ ९७ ॥ जलचरमिथुनसके

सरिमीना वृश्चिकमेषघटोयुवतीवा ॥ वृषभस्तौलिनिकार्मुककर्कटाः सुतधनशौतिषडष्टकयोगाः ॥ ९८ ॥ भवेत्त्रिकोणे बहुपुत्रवित्तद्विर्द्वादशे चार्थमुपैति कन्या । षट्काष्टके सौख्यफलं विधत्ते स्त्रीणां विवाहं ग्रहमैत्रयोगात् ॥ ९९ ॥ इति विवाहे राशियोजनविधिः॥ विनापरार्द्धे च कपालसंधौक्रांत्योश्च साम्ये गतगम्ययुक्ते ॥ सवैधृते च व्यतिपातयोगे पाणिग्रहे स्याद्विपभक्ष्यतुल्यः ॥ ५०० ॥ क्षेपकम्॥शुद्धे दिने विवाहे सुमुहूर्त्तयोगे तांबूलगंधकुसुमैः परिपूज्य मित्रान् ॥ आत्मानुरूपकुलशीलधनाययूनेकन्याप्रदानमुदकंविसृजेच्चपाणौ ॥ १ ॥ हस्तोत्तरास्वातिमघानुराधाशाङ्गेशपूर्वोदयनैर्कतेषु ॥ पुत्रार्थसौभाग्यसुखानि कन्या प्राप्नोति शेषेषु च भर्तृशोकम् ॥ २ ॥ रोहिण्युत्तररेवतीमृगशिरोमूलानुराधामघाहस्तस्वातिपुतौलिषटधनुनृयुग्मंशेषुपाणिग्रहः ॥ समाऽष्टांत्यबहिःशुभैरुद्धपताका दशद्वित्रिरो ( ? ) क्रूरैरुपायषडष्टगैर्न तु भृगौ षष्ठे कुजे चाष्टमे ॥ ३ ॥ षड्द्वित्रिलाभे ष्विनसौममंदाः कुर्वंति सौभाग्यसुतार्थयुक्तम् ॥ मृत्यावरोगान्विविधान्कलत्रे मृत्युर्विलग्नेऽथ विधिं द्वितीये ॥ ४ ॥ सौरेऽथ युक्ते हिबुकोऽल्पदुःखं सौमेन सूर्येण च बंधुवैरम्॥ अंतेवयं पुत्रधनं सुतस्थे दुःशीलङ्गा ( ? ) कर्मणि धर्मगैर्वा ॥ ॥ ५ ॥ संपत्तिवातं रिपुभे गुरुज्ञे धुनोतिकष्टं भृगुजे रवौच॥ व्ययं व्ययस्थे निधने च मृत्युं तृतीयगे देवरदत्तमाना ॥ ॥ ६ ॥ त्रिकोणयोः स्त्रीजननी शशांके ह्याये समृद्धा सुभगा

भवने गौरीव शैलांगणे (?) ॥ १५ ॥ कन्यातुलामिथुनराशिषु लग्नगेषु तेष्वन्यराशिषु च तद्भवभागगेषु ॥ सौम्येषु सप्तनिधनांत्यबहिःस्थितेषु पापेष्वरातिसहजाऽष्टमलाभगेषु ॥ १६ ॥ दुश्चिक्येऽर्थमाप्तिगे शीतरश्मौ शुक्रे षष्ठे नाऽष्टमेंगारके वा ॥ नाभित्रांशे स्वाधिनाथेन दृष्टे लग्नांशे स्यात्तद्विवाहः प्रशस्तः ॥ १७ ॥ कन्यातुलानृमिथुनेषु साध्वी शेषेष्वसाध्वी धववर्जिता च ॥ निषेऽपि लग्ने द्विपदाश इष्टः कन्यादिलग्नेष्वपि नान्यभागः ॥ १८ ॥ लग्नांशपतिर्दृष्टः पुत्रायुर्धनवृद्धिदः पुंसाम् ॥ नारीणामस्तांशस्वामी निरीक्षितः शस्तः ॥ १९ ॥ विलग्नांशस्वनाथेन यद्युद्वाहे न दृश्यते ॥ पुंविनाशस्ततोऽस्तांशो यद्येवं योषितस्ततः ॥ २० ॥ उदयास्तगतौ भागौ स्वेशदृष्टौ शुभप्रदौ ॥ यथासंख्यं नृनारीणामन्यथा मरणप्रदौ ॥ २१ ॥ यो यत्र कथितोंशो (?) नानारीनरसंज्ञितः ॥ चतुष्पदगमंदृष्टे नित्यशस्तं प्रयाति सः ॥ २२ ॥ उदयास्तराशिनाथस्यां स्तांशेसत्वमुच्यते ॥ न दृष्टस्तेन लग्नं स्याद्विवाहे हन्यते स्त्रियम् ॥ २३ ॥ न सकलगुणसंपल्लभ्यतेऽल्पैरहोभिर्बहुतरगुणयोगं योजयेन्मंगलेषु ॥ प्रभवति नहि दोषो भूरिभागे गुणानां सलिललव इवाग्नेः संप्रदीप्तेंधनस्य ॥ २४ ॥ गुणशतमपि दोषः कश्चिदेको विरुद्धः क्षपयति यदि नान्यस्तद्विरोधीगुणोऽस्ति ॥ घटमिव परिपूर्णं पंचगव्यस्य शक्त्यामाति नयति सुरायाबिंदुरेकोऽपि सर्वम् ॥ २५ ॥ कृतकौतुकमंगलो वरो मधुपर्काधशनादनंतरम् ॥ ज्वलिताग्निसमक्षमंगनपदा

माप्नोति शुभाऽशुभं ततः ॥ २६ ॥ घृतदधिमधुपर्कप्राशना-दग्निसाव(?)धिशुभमशुभं वा पाणियोगेंगनायाः ॥ बहुसुतमत-मेतत्संप्रदानंप्रदानमुपयमनचंद्रालोकपेष्वे ( ? ) व केचित् ॥ २७ ॥ दाराग्निहोत्रसंयोगं कुरुते योग्रजे स्थिते ।। परि-वेत्ता स विज्ञेयः परीवित्तिस्तु पूर्वजः ॥ २८ ॥ परिवे-त्ता परीवित्तिर्यया च परिविद्यते ॥ ते सर्वे नरकं यांति दातृयाजकपंचमाः ॥ २८ ॥ खंजवामनकुब्जेषु गद्गदेषु जडेषु च ॥ जातांधे बधिरे मूके नवोढा परिविद्यते ॥ ३० ॥ कन्याहस्तेनाष्टौ हस्ता वेदीशतांगुलाचोर्द्धम् ॥ स्तम्भाश्चतु-र्षु कोणेष्वभिरमणीया द्वयोर्मध्ये ॥ ३१ ॥ संस्थाप्य घटानष्टौ जलपूर्णांश्चूतपल्लवसमेतान् ॥ ऐंद्रायैरभिषेको होमो विप्रार्चनं दानम् ॥ ३२॥ इति विवाहपटलं समा-प्तम् ॥ संध्यातपारुणितपश्चिमदिग्विभागे व्योम्नि स्फुरद्वि-मलतारकसन्निवेशे ॥ उच्चैर्गवांखुरपुटोच्छलितैरजोभिर्गोधू-लिरेष कथितो भृगुजेन योगः ॥ ३३ ॥ यावत्कुंकुम-रक्तचंदननिभोप्यस्तं न यातो रविर्यावच्चोडुगणो नभस्त-लगतो नो दृश्यते रश्मिभिः ॥ गोभिः स्वाग्रिखुराग्रभागद-लितैर्व्याप्तं नभः पांशुभिः सा वेला धनधान्यवृद्धिजननी गो-धूलिका शस्यते॥३४॥प्राच्याः प्रायो हीनवर्णाः सगोपाः सं-ध्याकालं प्राहुरिष्टं न शेषाः ॥ यावच्छांति गोरजो ना-भ्युपैति तावत्तेषां चित्तशुद्धिर्विवाहे ॥ ३५ ॥ पिंडीभूते वसंते च ज्येष्ठाषाढे च मध्यमे ॥ प्रावृषार्द्धस्थिते भानौ

शरद्यस्तंगतेऽपि च ॥ ३६ ॥ हेमंते च गते सूर्ये संध्यायां माघफाल्गुने ॥ योगोऽयं मुनिभिः प्रोक्तो गोधूलिरिति चोत्तमः ॥ ३७ ॥ गोधूलिं त्रिविधां वदंति मुनयो नारीविवाहादिके हेमंते शिशिरे प्रयाति मृदुतां पिंडीकृते भास्करे ॥ ग्रीष्मार्द्धास्तमिते वसंतसमये भानौ गतेऽदृश्यताम्॥ सूर्य्ये चास्तमुपागते भवति सा प्रायः शरद्वर्षयोः ॥ ३८ ॥ नास्मिन्ग्रहा न तिथयो न च विष्टितारा ऋक्षाणि नैव जनयंति कदापि विघ्नम् ॥ अव्याहतः सतु तदैव विवाहकाले यात्रासु चायमुदितो भृगुजेन योगः ॥ ३९ ॥ अशुभेऽपि शशिनि प्रतिकूलभेषु पापेष्वपि क्षितिसुतेऽपि विलग्नभागे ॥ गोधूलियोगमपरे परिकीर्तयंति स्त्रीणामपत्यपरिसौख्यवहं विवाहे ॥ ४० ॥ शुभाशुभयुतं नूनं राशेर्दोषं विनिंदितम् ॥ विहाय लग्नविच्छेयं गोधूलिं प्राह चासुरिः ॥ ४१ ॥ लग्नं यदा नास्ति विशुद्धमन्यद्गोधूलिकं साधु तदा दिशंति ॥ लग्नेऽविशुद्धेऽप्यतिवीर्य्ययुक्तं गोधूलिकं नैव फलं विधत्ते ॥ ॥ ४२॥ इति गोधूलियोगः ॥ नानावक्रपरिश्रमेण बहुना किं विस्तरेणोच्यते गर्गाद्यैर्न तु संमतं स्मृतिमतं नैव क्वचिद्दृश्यते ॥ तस्मात्सारतरं करोमि रुचिरं योगं दशाख्यं ध्रुवं येनोढा सुभगा भवेदविधिना मानार्थसौख्यान्विता ॥ ४३॥ अश्विन्यादित एव यत्र सविता यच्चेष्टमृक्षं तयोः संख्यास्यैकक तर्तुदिग्भवतिथिधृत्यूनविंशं नखाः ॥ अंगार्थं दशयोगके प्रकथिता व्यूढात्र योषिद्ध्रुवं वैधव्याप्रजतां प्रयाति मरणात्मा-

मोति दुःखानि च ॥ ४४ ॥ शून्यैकवेदनवदेशक्रतुप्रयुक्ताः पंचैकनागशिशिरांशुनवैकखाब्धि ॥ सोऽध्यक्षमिंदुयुतभानुसमन्वितं च भागं च देयमृदुभिर्दशयोगचक्रात् ॥ ४५ ॥ अश्विन्यादौ शशी यत्र तत्रादौ पुत्रवान्रविः ॥ अपूर्णस्यैकपूर्णत्वं तदार्द्धैनैवशोधयेत् ॥ ४६ ॥ कौबेरयाम्यप्रगुणेन दंडाश्चतुर्दश स्थाप्य करग्रहेषु ॥ पूर्वापरस्यां पुनरेकदंडभागं दशाचक्रमिदं वदंति ॥ ४७ ॥ पूर्वस्यामस्तिदण्डार्थमधिरचिता कृत्तिकादिक्रमेण चक्राणामष्टकानां गणनविधिरयं दक्षिणावर्त्तकेन ॥ विध्वस्तैरेकदंडं परिणयनविधौ क्रूरसौम्ये शशांकः कुर्याद्वैधव्यरोगीसुतधनमरणं सौख्यसंपद्विनाशम् ॥ ४८ ॥ आश्लेषामृगरेवतीमघामूलोत्तराषाढचित्रान्येव धनिष्ठा(?)॥ आश्लेषायां व्यतीपातो मघायां परिघस्तथा ॥ ४९ ॥ चित्रायां वैधृती स्याच्च मूले नवजनांतकम् ॥ परामुखो विश्वदेवेतुत्रिमुश्च त्रिपुश्चनाह्वये (?) ॥ ॥ ५० ॥ रेवत्यांशूलमित्याहुर्गंडचक्रे यमेनतु ॥ कृत्तिकाकालदंडश्च सौम्यं वज्रमुदाहृतम् ॥ ५१ ॥ इत्येते दारुणा नित्यं दश योगाः प्रकीर्तिताः ॥५२॥ वेदेंदुशैलरामा ३७१४ यमवेदेंदुयुगा ४१४२ स्तथैकखर्तुशराः ५६०१ ॥ शशिवेदर्तुतुरंगाः ७६४१सप्तवसुसमुद्रवसवश्च८४८७ ।५३॥नवनवयमलरंध्राः ८२९९षष्टिशून्यतुरंगवसवः८७०६०॥वस्वंबरयमशशिनो १२०८गुणांबरैकयमलास्तथा२१०३॥५४॥एतेखंडा हता द्वाभ्यां हरेच्चाष्टगुणे क्रमात्॥शेषे षष्टिगुणे लब्ध्वा दश योगाः

प्रकीर्त्तिताः ॥ ५५ ॥ यो दशायोगदशाभे कर्म यदा वा स्थितं कुरुते ॥ सदहनधृतमिव नचिरादलीनतां मानवो याति ॥ ॥ ५६ ॥ दशायोगे हते ऋक्षे कर्माणि कुर्वतः सदा ॥ वदंति केचिदाचार्य्या ध्रुवं मरणमादिशेत् ॥ ५७ ॥ दशयोगे महाचक्रे प्रमादाद्भियते यदि॥क्रूरसौम्यग्रहेणापि दंपत्योरेकनाशनम् ॥ ५८ ॥ इतिदशयोगचक्रम् ॥ पूर्वे कुबेरे वरुणे च याम्ये दिङ्मंडले सप्त भवंति रेषाः ॥ ताभिर्यतीनां विदितार्थसिद्धा वदंति ते सप्तशलाकचक्रम् ॥ ५९ ॥ सचे सप्तविनिपारोपिका(?)तिर्यगूर्द्धमथकृत्तिकादिकम्॥ लेखयेदभिजिता समन्वितमेकरेखगमनेनभियते ॥ ६० ॥ चक्रे शलाकादंडपतिते विद्धः शशिकृद्दौर्भाग्यपरवेश्मसंगनिर्कीर्ति कुर्याद्विरागं शुभैः (?) ॥ दिग्भ्रांता कुलटा पराश्रमरता पापग्रहैः पुँश्चली वंशाच्छेदकरी विहाय कुलटामार्गं विमार्गे रता ॥ ६१ ॥ यस्याः शशी सप्तकलाकमित्रः क्रूरेण सौम्येन च सा विवाहे ॥ रक्तांशकैनैव रुरोदमाना स्मशानभूमिं दिनपे प्रयाति ॥ ६२ ॥ विद्धि सप्तशलाकाख्ये विधवा रक्तवाससा ॥ पुनर्यात्यचिरान्नारी मुखागोमुखचंद्रिकाम् ॥ ६३ ॥ एकदंडस्थिते पापे विवाहे यदि दीयते ॥ पप्रनाशं भवेत्तत्तदेव कन्यापि चेद्भवेत् ॥ ६४ ॥ यस्याः शीतकरोविद्धःपापैः सप्तशलाकजे ॥ विवाहे मरणं तस्य तेनैव रक्तवाससा ॥ ६५ ॥ इति सप्तशलाकाचक्रम् ॥ नान्यैःसमेतः शुभकृच्छशांकः केषांचिदिष्टये बुधजीवयुक्तः॥

क्रूरग्रहाणां दिवसे विवाहः भीतिः शुभानां तदहः समोऽस्याः॥ ॥ ६६ ॥ दारिद्र्यं रविणा कुजेन मरणं सौम्येन न स्युः प्रजा दौर्भाग्यं गुरुणा सितेन सहते चंद्रे च सापत्न्यकम् ॥ प्रव्रज्या-र्कसुतेन सेंदुजगुरौ वांछंति केचिच्छुभं ह्यार्यैर्मृत्युरसग्रहैर्बहु-विधा दीक्षा प्रवासः शुभैः ॥ ६७ ॥ पापांतस्थे निशानाथे पापसंपर्कगेऽपि वा ॥ शुभकर्मशुभाशंसी नैव कुर्यात्कदाचन ॥ ६८ ॥ सक्रूरे वा शशिनि क्रूरद्वयमध्यगे विलग्ने वा ॥ शुभकर्माणि शुभेषु नैव दिशेन्नराणां हि ॥ ६९ ॥ शशिनि क्रूरसमेते क्रूरद्वयमध्यभवनसादे वा ॥ शुभकर्माणि संचरतां विनिर्देश्यं शुभं कर्म ॥ ७० ॥ भवति यदा तुहिनांशुः कर-द्वयमध्यगो विलग्ने वा ॥ यात्रादीनि तदानीं नोपदिशेदिष्ट-कर्माणि ॥ ७१ ॥ संचरता न विनिर्देश्यं शुभं कर्म(?)॥तारा पतिविलग्ने वा दुरितग्रहमध्यगः ॥ विवाहादिप्रयाणेषु त्यजे-चैनं जिगीविषुः।७२।इति क्रूरयुतक्रूरमध्यगतचंद्रचिंता॥ सुररिपुविरोधेसुररिपुभोगे विवाहने कन्या॥जारं जारागमेऽपि यजति न कार्यं क्रमेणापि ॥ ७४ ॥ विचरति सहैकरा-शिं शशिनि क्रूरेण राहुणा वापि ॥ परिणीता पतिमरणं मरणमवाप्नोति दिवसे ॥ ७५ ॥ राहुसमेते चंद्रे प्राप्ते पाणि-ग्रहे कन्या॥ परपुरुषासक्तमना नीचैरपि चायाति सा संगम्॥ ॥ ७६ ॥ सप्तमस्थे निशानाथे सक्रूरे विहगेऽपि वा ॥ चिरं कन्या भवेदूढा पतिसौख्यपरिच्युता ॥ ७७ ॥ इति राहु-वेधयुतचंद्रचिन्ता ॥ चंद्रात्सप्तमराशिगे दिनकरे त्यक्ता

धनैः कन्यका सोमेन प्रमदा प्रयाति मरणं सौरेण वंध्या तथा ॥ जीवः शुक्रशशांकजैः शुभकराः केचिद्वदंति क्रमाद्भर्तृप्रीतिदीक्ष(?) चास्तभवने नित्यं प्रवासान्विता ॥ ७८ ॥ यात्राविवाहादिशुभक्रियासु क्रूरग्रहादस्तगतः शशांकः ॥ बलैः समेतोपि बहुप्रकारं करोति नाशं नचिरान्नराणाम् ॥ ॥ ७९ ॥ पुंसवनं पाणिग्रहणं तथोपनयनं च ॥ चंद्रात्सप्तमभवने रविजाऽर्ककुजादिभिर्नेष्टम् ॥ ८० ॥ भास्कराकिकुजाक्रांतं मृगांकात्सप्तमं त्यजेत् ॥ विवाहे विधवा नारी पुंसि गर्भो विनश्यति ॥ ८१ ॥ स्त्रीणां विवाहे विबलैरुपेताः पत्युः प्रणाशं विहगा विदध्युः ॥ त्यत्क्वा तथा दैत्यगुरुं गुरुं च निशाकरादस्तगृहं प्रपन्नाः ॥ ८२ ॥ सौरारजविबुधराहुरवींदुशुक्रा दद्युः प्रसह्य खलु सप्तमराशिसंस्थाः ॥ वैधव्यबंधनभयक्षयवित्तनाशव्याधिप्रवासमरणानि यथाक्रमेण ॥ ८३ ॥ पापात्सप्तमगःशशी यदि भवेत्पापेन युक्तोऽथवा यत्नेनापि विवर्जयेन्मुनिमताद्दोषोऽपि संकथ्यते॥ यात्रायां विपदो गृहेषु मरणं सौरे च रोगो महान्नुद्वाहे विधवा व्रतेपि मरणं पुंसःसशूलांगना॥८४॥इति जामित्रचिंता ॥ मित्राश्रये मित्रसमीक्षितो वा मित्रांशके मित्रसमागतो वा ॥ क्रूरग्रहादग्रगतोऽपि सोमः समीहितार्थं वितरेन्नराणाम् ॥ ८५ ॥ स्वोच्चे स्वमित्रभवने सुहृदीक्षितो वा भास्वन्मयूखविकलीकृतदिङ्मुखो वा ॥ जामित्रदोषमपकृत्य इमंकरोति सोमः समीहितफलं खलुमानवानाम्॥८६॥तुंगात्रि-

कोणभवनेऽवनिजे निजे वा सौम्यादिमित्रगृहगोऽपि तदीक्षितो वा॥जामित्रवेधजनितानपहृत्य दोषान्दोषाकरः सुखमनेकविधं विधत्ते ॥ ८७ ॥ स्वोच्चेऽथवा स्वभवने स्फुटरश्मिजालः सौम्यालये बुधगृहे शुभवर्गयोगे ॥ जामित्रकादिपरिसंचितदोषराशिं हित्वा ददाति बहुशः सुखमेव चंद्रः॥८८॥क्रूरग्रहादस्तगतोपि सोमः स्वोच्चस्थमित्रालयगोऽथ पूर्णः ॥ मित्रे क्षिपश्यन्स(?)समस्तदोषं पूर्णं विधत्ते विहितार्थसिद्धिम् ।८९॥ अनिष्टस्थानसंस्थोपि प्रशस्तफलदः शशी ॥ सौम्ये भागेऽधिमित्रेण बलिनात्र निरीक्षितः ॥९०॥ प्राप्तोदयःप्राप्तबलोऽपि चंद्रःसौम्येक्षितः सौम्यसमन्वितोऽपि॥निहत्य चाशेषमरिष्टमिष्टं फलं विधत्ते तुहिनांशुमाली ॥ ९१ ॥ इति चंद्रकृतजामित्रप्रकरणम् ॥ तारास्तत्र न गण्यंते यत्र चंद्रो बलोत्तरः ॥ स्वामिना परितुष्टेन भृत्यः क्रुद्धो निरर्थकः॥ ९२ ॥ यच्छति भूषणमतुलं तारापिदृश्यते नभसि।।तदपि न विना चंद्रबिंबेन (?) ॥९३॥ यद्यपि तारानिकरैःसकलैः परिपूर्णितं नभो भाति।।तदपि न याति विकाशं तेन विना चंद्रबिंबेन ॥ ९४ ॥ न भवंति मनोऽनुकूलकर्मारंभःसुलग्नलाभेऽपि ॥ चंद्रेऽविमले पतिरिव वृद्धः पीनस्तनवतीनाम् ॥ ९५ ॥ तिथिरेकगुणा प्रोक्ता वारश्चैव चतुर्गुणः॥ ऋक्षं षोडशमित्याहुर्योगश्चैव शताधिकः ॥ ९६ ॥ सहस्रांशो रविः प्रोक्तश्चंद्रो लक्षगुणाधिकः ॥ वर्जयित्वा बलं सर्वं तस्माचंद्रबलाबलम् ॥ ९७ ॥ एवं योगे न कर्त्तव्यं चंद्रमा

यत्र दुर्बलः ॥ नैवेह धारयेद्वर्णान्निपतंति महाद्रुमाः ॥ ९८ ॥ इति चंद्रबलम् ॥ कृष्णपक्षे शशिनः प्रभावसाराबलं दिवा देयम् ॥ विदेशगे वा विकले च पत्यौ सर्वाणि कार्य्याणि करोति भार्य्या ॥ ९९ ॥ कृष्णे बलवती तारा शुक्ले च बलवाञ्छशी ॥ तस्मात्कार्य्यं प्रयत्नेन विशुद्धे चंद्रतारके ॥ ॥ ६०० ॥ ताराबले न कर्त्तव्या चंद्रमा यत्र दुर्बलः ॥ दुर्बले नैव शुक्रःस्यात्प्रारब्धिविषये यतः ॥ १ ॥ यद्यपि बलवांश्चंद्रो विदग्धैश्च कथ्यते मुनिभिः ॥ कुरुते तथा विधुरितं श्रियं च समस्थिता तारा ॥ २ ॥ शस्तः शशी तारबलेन पुंसां रविस्तु शस्तः शशिनो बलेन ॥ शेषास्तु शस्ताः सवितुर्बलेन महीसुतायाः क्रमशो वरिष्ठाः ॥ ३ ॥ इति राजमार्त्तंडे ताराबलं संपूर्णम् ॥ सौम्ये सुहृन्निजभवने चंद्रे तुंगत्रिकोणकथितेपि॥चंद्रो यदा तदानीं दोषो न दोषो दोषाय ॥ ४॥ स्वसुहृत्रिकोणराशौ शुभस्य वा शशी यत्र ॥ अणुतामपि प्रयातेवासस्यान्नाशनं तत्र ॥ ५ ॥ शुभदग्रहस्य भवने भवति यदींदुःकलावशेषोऽपि ॥ तारा शुभदापि शुभा भवति तदानीं नरेंद्राणाम् ॥ ६॥ शशिनि परिस्फुटकिरणे स्वतुंगभवने स्ववर्गे वा ॥ क्षौरादिकोपकरणे शतदोषो न दोषाय ॥ ७ ॥ यदा भवति शीतांशुः कलादिबलसंयुतः ॥ तदा ताराविरोधे हि कार्यं कुर्यादतंद्रितः ॥ ८ ॥ इति ताराच्छेदः ॥ ज्येष्ठाषाढश्रावणभाद्राश्विनमाघकार्तिकाश्चैत्रः॥ पौषोप्यनिष्टफलदः प्रथमागमने वधूनाम् ॥ ९ ॥

भर्तुर्गेहविशोभने दिनपतौ नास्तंगते भार्गवे सूर्येऽर्की-
टघटाजगे शुभदिने पक्षे च कृष्णेतरे॥ हित्वा दिक्प्रतिलोमगौ
बुधसितौ लालाटगं दिक्पतिं चानीता गुणशालिनी नवव-
धूर्नित्योत्सवे नंदते ॥ १० ॥ वैशाखेसुभगाप्रभूतधनिनी
मार्गे च पुत्रान्विता चाषाढे मुखरा स्वभावकुटिला वंध्या
पतिद्वेषिणी ॥ भोगे क्षांतिविरोधिनी सुचपला शुश्रूषया
योगिनी ज्येष्ठे निर्द्धनताधिपक्षजननी वैशाखमार्गान्विते
॥११॥ मासे फाल्गुनिके क्रमेण कथिता पुत्रार्थसौख्या-
न्विता नीहारांशुधनोदितिगुरुब्रह्मानुराधाश्विनी ॥ शक्रो
हस्तभवायुवारुणहरित्वाष्ट्रेप्रशस्तेतिथौ कुंभाजालिगते रवौ
शुभकरे प्रातोदये भार्गवे ॥ जीवारास्फुजितां दिने नव
वधूसम्प्रवेशः शुभः ॥१२॥ भास्करे रोगयुक्ता च परपुरु-
परता बुधे ॥ भौमे मृत्युमथायाति प्रवेशेऽवशिष्टाःशुभाः ॥
अष्टपुत्रवतीजीवेचंद्रेलक्ष्मीप्रवर्द्धिनी ॥ १३ ॥ अतिप्रिया
भवेच्छुक्रे ह्यष्टपुत्रवती शनौ ॥ नंदायां पुत्रजननी भद्रायां
मृत्युरेवच॥जयापूर्णाकुलंवृद्धी रिक्ता संतापकारिणी॥१४॥
॥ इति नववधूप्रवेशः ॥ उदितो यतोऽर्थतश्च भ्रमणे यहा-
रक्षेषु चारस्थः॥ तत्रिविधं शुक्रं त्याज्यं तत्रोदयो यत्नात् ॥
प्रतिशुक्रबुधशनिविष्टिहतादिगधः कुरुते नृपविर्गमने ॥
मदिरामुदिताकुलिताप्रमदैवंकुलटापरवेश्मरता ॥ १६ ॥ न
प्रतिशुक्रे सिद्धिं प्रबलोऽप्यर्थः प्रयाति यातृणाम् ॥कालेऽत्यन्ते
त्यतिभृगुं विजिगीषुर्नास्तगे शुक्रे ॥ १७ ॥ दिक्द्वारिके

मगेहराजे संध्यार्कोपगते विदीधितो ॥ शुक्रे प्रवसन्नरोर्थं संयाति बुधे च विलोमसंस्थिता ( ? ) ॥ १८ ॥ कलुषवपुषि ग्रहे गते प्रतिलोमे नीचगे वाऽस्तगे भृगौ ॥ बलसञ्जोपि नृपोवश्यं शत्रोर्वशंयाति ॥ १९ ॥ एवंविधेपि शुक्रे यायायदि चंद्रजोनुकूलस्थः ॥ प्रतिबुधयातस्यान्ये संत्राणेन ग्रहाः शस्ताः ॥२०॥ एकग्रामे पितुः स्थाने दुर्भिक्षे राजविप्लवे ॥ मानिना नीयमानायाः प्रतिशुक्रो न दुष्यति ॥२१॥ इति प्रतिशुक्रचिंता ॥ रेवत्यां च धनिष्ठासु हस्तादिषु च पंचसु॥शंखविद्रुमयुक्तानां परिणामं प्रशस्यते॥२२॥ न धारयेद्विद्रुमशंखमुक्ता आदित्यपुष्योत्तररोहिणीच॥ दध्याच्च पौष्णाश्विनिवासवेषु भर्तुः सुखार्थं करपंचकेषु ॥ २३ ॥ बुधगुरुसितवारे त्यक्तरिक्ते तिथौ च पितृवसु (?) चित्रामैत्रपुष्योत्तरेषु॥रजतकनकरत्नं शंखरत्नप्रवालं शुभमिह च समंत्रं धार्य्यमाणं वराणाम् ॥ २४ ॥ चित्रोत्तरेषु पितृभमैत्रपितामहेषु चित्रार्कयोर्वसुपुनर्वसुतिष्यभेषु ॥शंखप्रवालमणिमौक्तिकहेमरत्नादंतोपभोगकरणानिशुभप्रदानि ॥ २५ ॥ पुनर्वसुतिष्यशशांकहस्तश्रविष्ठमित्रोत्तरचित्रभेषु ॥ वारे भृगोरात्मजजीवबौधे धार्यं चमुक्तामणिहेमरत्नम् ॥ २६ ॥ शंखविद्रुममुक्तार्यं पुष्यादित्योत्तरेषु च ॥ धारयेन्न च रोहिण्यां भर्तुर्जीवनकांक्षिणी॥ २७॥अस्तंगते भृगुसुते शयने च विष्णोर्जन्माष्टपापसहितेनचवैविदध्यात् ॥ रिक्तेंदुभानुदिवसांशकवर्जितेच रक्तादिकं च पुटकं युवतिः कथंचित् ॥ २८ ॥ इति शंखाद्यलंकारः ॥ ब्रह्मानुराधवसुपुष्यविशाखहस्तचित्रोत्त-

रासुपवनादिचवाजिपौष्णाः ॥ सौख्यं भवेदभिनवांबरधारणेषु मृत्युप्रमोदयशिवो व्यसनाय शेषाः (?) ॥ २९ ॥ हस्तादिपंचकपुनर्वसुवासवाश्वितिष्यप्रजापतिषु सोत्तररेवतीषु ॥ दध्यान्नवांबरमथाजभुजंगभाग्यपित्र्येशभेषु भरणीषु च नैव धार्यम् ॥ ३० ॥ हस्तात्पंचकदितिगुरुवसुपौष्णितिसुधारान्योयमितरेषु वस्त्रं शिवपित्र्यौ मृत्युदौ नृणाम् (?) ॥ ३१ ॥ हानिः सूर्यदिने व्रणं शिशिरगौ भौमे रुजापीडितं बौधे बंधुसमागमः शुभसुखं जीवे विपक्षक्षयः ॥ उत्तुंगस्तनकामिनीसुखभवं नानाविधं भार्गवे रोगारातिभयं भवेदभिनवं वासः शनौ बिभ्रतः ॥ ३२ ॥ सूर्ये चाल्पधनं व्रणं शशिदिने क्लेशः सदा भूमिजे वस्त्रं लाभकरं बुधे सुरगुरौ वियागमः संपदः ॥ नानाभोगरतिप्रसादवनिताविद्यादिलाभं भृगौ दैन्यं शाश्वतरोगमेव कुरुते धृत्वांबरं सौरिणा ॥ ३३ ॥ रविणा त्रुटचते वस्त्रं सोमे शोकजलप्लुतम् ॥ अंगारके भवेन्मृत्युः सर्वं हंति शनैश्वरः ॥ ३४ ॥ मध्ये दग्धे वाससः कर्दमाद्यै लिप्ते चेष्टं पाटिते चापि विंद्यात् ॥ पार्श्वे भागे स्याद्दशांते च सौख्यं धौते दोषैर्न स्वयं फाटिते च ॥ ३५ ॥ लिप्ते मसीकर्दमगोमयाद्यैश्चित्रे प्रदग्धे स्फुटितेऽथ विंद्यात् ॥ पुष्टं नवेऽल्पाल्पतरं च भुक्ते पापं शुभं नाधिकमुत्तरीयम् ॥ ३६ ॥ वस्त्रस्य यत्सदसदात्मकमुक्तमेतत्पुंसां भवेत्तदधिकं फलमुत्तरीये ॥ धार्यं नवांबरमनिष्टफलेऽपि धिष्ण्ये पाणिग्रहे

द्विजमते च नृपाज्ञया च ॥ ३७ ॥ प्रोक्तं नवांबरं शस्तमृक्षेऽपि गुणवर्जिते ॥ विवाहे राजसन्माने ब्राह्मणानां च सम्मते ॥ इतिनूतनवस्त्रपरिधानम् ॥ अथ विदितजन्मसमयं नृपमुद्दिश्य प्रवक्ष्यते यात्रा॥अज्ञाते तु प्रसवे गमने गमनं स्यात्कांचित्किंचित् (?)॥३८॥ समधुरफलपुष्पक्षीरवृक्षावृतायां गोशकृत्फेनवत्यां सलिलकुसुमवत्यां पृच्छतो भद्रमूर्त्याम्॥ ग्रहगति तथा सादरं पृच्छतश्च ॥ स्तनचरणतलौष्ठांगुष्ठहस्तोत्तमांगश्रवणदशननासागुल्फरंध्राणि भूयः (?)॥ ३९ ॥स्पृशति यदिवराग्रैर्गंडकायंशकं वा ॥ श्रुतिगमनसुशब्दान्व्याहरञ्छास्ति शत्रून् ॥ ४० ॥ नंदा भद्रा जया रिक्ता पूर्णा संज्ञानुरूपफलमेताविदुः ॥ नेष्टा मध्यचराश्चेतिशुक्लकृष्णेचेमास्तिथयः प्रशस्तायाः ( ? ) ॥ ४१ ॥ सर्वाःशस्तास्तिथयः शुक्ले पक्षे हित्वा त्र्यंशबहुलेऽन्यकश्चित्॥षष्ठाऽष्टम्योर्वसुलब्ध्वापि यातो द्वादश्यां वा नाशमाशु प्रयाति ॥ प्रतिपदफलमेके पंचदश्यां च नेष्टं जगुरिदमपि तज्ज्ञास्तेचमेचावधार्य ॥ किमपि फलमपीदं तैः समीक्ष्योक्तमेतन्मुनिवचनविरोधे युक्तयः किं नु चिंत्याः ॥ ४२ ॥ तिथयोऽमावास्यायाः पंचोर्द्धमधः पंच रिक्ताद्याः ॥ नोशौचे सूतकोत्सवदिवसाश्च यथा सतां शुभदाः ॥ ४३ ॥ तिथिं चतुर्थीं नवमीं चतुर्दशीं विहाय विष्टिं करणं च गच्छतः ॥ भवंति चामीकरवारणाश्च चतुर्थपूर्वोत्तदवाधिकारिणः॥ ४४ ॥प्रतिपत्सु प्रयातानां सिद्धिरेव न संशयः ॥ द्वितीयायां शुभः पंथास्तृतीयायां जयो भवेत्

बंधनं चैव संक्लेशाश्चतुर्थ्यां नात्र संशयः ॥ पंचम्यां वित्तलाभश्च षष्ठ्यां यदि विनाशनम् ॥ ४५ ॥ सप्तम्यामर्थलाभश्च अष्टम्यां शस्त्रघातनम् ॥ नवम्यां मृत्युसंयोगो न गंतव्यं कदाचन ॥ ४६ ॥ दशम्यां भूमिलाभः स्यादेकादश्यां तथैव च ॥ द्वादश्यां च न गंतव्यं सर्वसिद्धा त्रयोदशी ॥ ॥ ४७ ॥ शुक्ला चाप्यथवा कृष्णा वर्ज्जनीया चतुर्दशी ॥ अमायां तु निषिद्धायां पूर्णिमायां निषेधयेत् ॥ वित्तप्रमोदं प्रतिपत्तु याने त्रयोदशी कोशफलादिवृद्धिः ॥ विश्वंभरालाभमपि द्वितीया दशम्यभिप्रेतमपि प्रकुर्यात् ॥ ४८ ॥ एकादशी विषयसौख्यसमीहितार्थमर्थागमं गच्छतोपि तिथिस्तृतीया ॥ पंचम्यनेकविधसौख्यफलं ददाति सप्तम्यभीष्टफलभूमिधनं नराणाम् ॥ ४९ ॥ तिथौ चतुर्थ्यामथ पंचदश्यां पष्ठ्यां नवम्यामुपयाति याता ॥ शत्रोर्वशं याति शतैकदंतिदानांबुसंसिक्तमहीतलोऽपि ॥ ५० ॥ यो द्वादशीं प्राप्य चतुर्दशीं वा मतिप्रयाणं कुरुतेऽष्टमीं वा ॥ स नाशमायात्यचिरेण राजराजेव चामात्यविलोमचेष्टः ॥ ५१ ॥ इति यात्रायां तिथिगणः ॥ गरवणिजविष्टिपरिवर्जितानि करणानि यातुरिष्टानि ॥ गरमपि केश्चिच्छस्तं वणिजं वणिक्क्रियास्वेव ॥ इति यात्रायां करणगणः ॥ सूर्यादिष्वनिनाशश्चाद्देशक्लिक्षयोऽर्थनाशश्च ॥ ज्वलनोऽसृक्पित्तरुजः कौने बौधे सुहृत्प्राप्तिः ॥ ॥ ५२ ॥ जीवे जयधनलब्धिः शुक्रे स्त्रीवस्त्रगंधलाभः ॥ दैन्यवधबंधरोगानाप्नोति दिनेऽर्कपुत्रस्य ॥ ५३ ॥ रास्तु-

पारकरसूर्यसुताऽवनीजतीक्ष्णत्विषामशुभदः कथितःप्रयाणे॥ आचार्यकं पुनरिदं त्वशुभः शुभो वा यः स्याद्ग्रहः शुभफलो दिनपः प्रशस्तः ॥ ५४ ॥ उपचयकरग्रहदिने सिद्धिः क्रूरेपि यायिनो भवति ॥ सौम्येऽप्यनुपचयस्थे न भवति यात्रा शिवाय यातुः ॥ ५५ ॥ तोयेशवह्निधनदांतकराक्षसानां याताथवानिलशतक्रतुशंकराणाम् ॥ दिग्भागमुष्णकिरणादिदिनेषु देवैः संरक्षितोपि निधनं नचिरादुपैति ॥ ५६ ॥ प्रतीचीं रविवारे च प्राचीं च रविनंदने ॥ उदीचीं भूमिपुत्रेण न यायाद्दक्षिणां गुरौ ॥ ५७ ॥ सूर्यः शुक्रः कुजो राहुर्मंदश्चंद्रो बुधो गुरुः ॥ अग्रतः शोभना यात्रा पृष्ठतो मरणं ध्रुवम्॥ इति यात्रायां वारफलम् ॥ दिशिदिशि बहुलाद्याः सप्तकाः प्राक्प्रवृत्ताः पवनदहनदिक्स्थास्तिर्यगत्रास्ति दंडः ॥ सुरगुरुरपि कृच्छ्रं याति तं लंघयित्वा नहि भवति विरोधो दिक्षु दंडैकगासु ॥ ५८ ॥ मेषाद्याब्रिपरिभ्रमेण सततं पूर्वादितः संस्थिता नक्षत्राणि च सप्तसप्त बहुलादीनि स्थितानि क्रमात् ॥ याभन्तेश्च मथादिशीं (?) शिपिमरुद्दिक्स्थं समुल्लंघयेद्दंडं याति तदामहांतमपि तं स्वल्पोऽप्यरातिर्जयेत् (?) ॥ ५९ ॥ प्राग्वरिकैरनलदिग्विविरोधमेति शेषाः प्रदक्षिणगता विदिशः प्रकल्प्याः ॥ उल्लंघ्यमपि काममियाल्लरेंद्रशूलं विहायः यदि दिङ्मुखलग्नशुद्धिः ॥ ६० ॥ पूर्वेणैंद्रं दक्षिणेनाजपादं रोहिण्योत्तरमर्यमभाख्यं च शूलम् ॥ कामंयायात्संपरायेषु कार्य्येषु द्वारेषु प्रोक्त शूलानि भानि ॥ ६१ ॥ ज्येष्ठायां

पुरुहूतदिङ्मुखगतः प्राप्तो बलो बंधनं याम्यामाजपदे मुरश्च बलवान्यातोमुरारेर्वशम् ॥ रोहिण्यां नमुचिः प्रतीच्यधिगत-श्चूर्णीकृतो वज्रिणा सौम्यामर्यमदैवते च गतवान्मृत्योर्वशं शंवरः ॥ ६२ ॥ चित्रास्वातिविशाखाभरणीपित्र्ये-शक्रचित्रकाश्लेषा ॥ नातिशुभदानि याने शेषाणि शुभानि धिष्ण्यानि ॥ ६३ ॥ चित्राग्नेयविशाखाश्लेषावायव्ययाम्य-रौद्रमघाः ॥ एतानि भानि गमने सर्वदिक्षु न शुभानि (?) ॥ ६४ ॥ विपर्यये त्वाष्ट्रयाम्यरूणाणां (?) अर्द्धदीयंती गमने जये स्युः ॥ पूर्वादिमाग्नेयमघानिलानां स्वाति मते-शमस्थः समस्ताम् (?) ॥ ६५ ॥ सर्वं दारिकसंज्ञं नक्षत्र-चतुष्टयं॥पुष्यो हस्ताश्विन्यौ नक्षत्रमित्रदैवं च (?) ॥६६ ॥ हस्तगुरुमित्रदैवतैः पौष्णविष्णुवसुशीतरश्मिभिः ॥ यानमे-भिरतिसुंदरं विदुः सर्व एव मुनयस्तु नेतरे॥ हस्तानुराधाश्विनि-तिष्यभेषु यानं विदध्यात्सकलासु दिक्षु ॥ पंचत्रिसप्ताय-विवर्जिताश्च ताराःप्रशस्ता दशमर्क्षयुक्ताः॥ ६७ ॥ मित्राधि-मित्रसाधकसंपत्क्षेमेषु कर्मभे चार्थान् ॥ प्राप्नोति नावम-क्षेष्वभिषेकपुनरर्क्षयातश्च ॥(?)६८॥ गुणवति तिथावृक्षेऽरिष्टे दिवागमनं हितं निशि च सुगुणे शस्तं पापे तिथौ गुणव-र्जिते॥ प्रतितिथिगदितान्दोषानात्मान्यतः प्रतिलोमगो गुणमपि तयोः सम्यग्धातुर्जगाद भृगुर्मुनिः ॥ ६९ ॥ गुणवत्तिथौ वरिष्टे धिष्ण्ये गमनं दिवा प्रशंसंति ॥ गुणवति धिष्ण्ये रात्रौ तिथौ च गुणवर्जिते मुनयः ॥ ७० ॥ दिग्दाहधूमपरिवेषवि-

कंपपांसुयुक्तेऽप्यथामयगदाशुभरोगपीडा॥ भिन्ने ग्रहे निवसता-मुपयाति यात्रा संध्यागते शनिहते च विघात उक्तः ॥ ७१ ॥ नक्षत्रमुपदिकरणं पश्चात्संध्यागतैर्ग्रहैर्भिन्नम्॥ क्रूरनिपीडितमुद्गतदूषितं चाशुभं सर्वम्(?)॥ इति यात्रायां नक्षत्रगुणाः ॥ इष्टं स्वजन्मलग्नं न जन्मराश्युद्गमस्तयोः स्थानात् ॥ पिथगृहाणि हितासुदयनेष्टानि शेषाणि (?) ॥ ७२ ॥ आसन्नजन्मवि राशिषु येषु शुभा भास्करादितीयाश्च ॥ ते लग्ने शस्यंते नेष्टाः पापग्रहाध्युषिताः(?)॥ ७३ ॥ सौम्यैयाध्युषिताः प्रसूतिसमये सूर्यादितीयाश्चये येच स्वोद्गमलाभ शत्रुसहजस्थानस्थिता राशयः ॥ ये मूर्ध्नोदयिनः स्वजन्मभवनेष्वेव त्रिलाभारिगास्तेष्वत्सु यियासतामभिमतस्यार्थस्य सिद्धिर्भवेत् ॥७४॥ रिपुनिधने रिपुनिधनं रिपुषष्ठे लग्नगे वधो यातुः ॥ केचिज्जगुस्तथान्यथादि भे क्रूरेष्टयोः स्थाने ॥ ॥ ७५ ॥ होराष्टमे जन्मगृहाष्टमे वा स्वजन्मतः शत्रुगृहोदये वा ॥ तद्राशिगैर्वा गमनं विलग्नं तुल्यं नराणां विषभक्षणेन ॥ ७६ ॥ स्वर्क्षस्वलग्नभवनाच विलग्नसंख्यं कृत्वाष्टमं व्रजति यद्यरिं निहन्यात्(?)॥ शत्रोरथैवमसिताशिमरीचिजालकालस्तदा जयति काल इवारिसैन्यम् ॥ ॥ ७७ ॥ मीनवृश्चिककर्कटैर्नृणामनुजैरपि लग्नमाश्रितैः ॥ गमनं प्रवदंति शोभनं मुभयोऽन्यजसमाश्रितोरपि ॥ ७८ ॥ शीर्षोदयेषु विनयोऽग्रपृष्ठोदयेषु लग्नेषु ॥ दिनमुदारेषु जयो विद्वारेथाहवेसंगः (?) ॥ ७९ ॥ पृष्ठोदयेऽपि षष्ठे यातुरवसगे

चिलग्नरौक्षौ॥विद्यारंभे न गच्छेज्जन्मनि चांशग्रहाध्युषिते ॥
॥ ८०॥ अविधेयभवनं यत्स्वजन्मतोर्क्षयोः प्रयातॄणाम् ॥
अप्यनुकूलं लग्नं धनक्षयायास्पदं भवति ॥ ८१ ॥ शशि-
वश्यतामुपेते स्वजन्मलग्नर्क्षयोर्विलग्नस्थे ॥ अपचयकरोऽ
पि यातुर्जयधनमानागमाः क्षिप्रम् ॥ ८२ ॥ मीनोदये प्रव-
सतः कुटिलः सदोषो मार्गो भवत्यकृतकार्यनिवर्त्तनं च ॥
अन्यांशकेष्वपिगमे वलवित्तदेव मीनांशकेष्वपचयर्क्षसमा-
श्रितेषु ॥ ८३ ॥ मीनोदये गमनमन्यग्रहोदयेषु मीनां-
शकेषु कुटिला मतिनिष्फलं तत् ॥ भौमानमाप्यभवनेषु
·विलग्नगेषु कुर्यात्तदन्यग्रहगेषु तदंशगेषु ॥ ८४ ॥ शीर्षो-
दये मनसि वांछितकार्य्यसिद्धिर्व्यर्थश्रमो भवति दिग्भनि-
लोमलग्ने ॥ ८५ ॥ इति यात्रायां लग्नफलम् ॥
नवभागे तिग्मांशोर्वाहननाशो विलग्नसंप्राप्ते ॥ कृच्छ्राद्गृहना-
गमनप्रतापमृदुता च चंद्रांशे ॥ ८६ ॥ कौजेनिशं शोकं
बौधे तुष्टिर्धनागमो जीवे ॥ भोगविवृद्धिः शुक्रे मृत्युविनाशो
रविसुतांशे स्यात् ॥ ८७ ॥ संतप्यते नवांशैः क्रूराणां
विलग्नस्थैः ॥ यौवनदुष्टस्त्रैरिव विक्षणोत्येषु दिवसेषु ॥
॥ ८८॥ तुष्टिर्भवति यियासोः शुभग्रहाणां नवांशलग्नेषु(?)
यौवनकांतारमिव व्यतीत्य कुशलेन धर्मविदः ॥ ८९ ॥
सौम्यांते लग्नगते रिपुयोद्धारो निहत्य निजसैन्यम् ॥ आ-
यातु यातुरंतिकमंशस्याद्विपरीतम् ॥ ९० ॥ इति या-
त्रायां लग्ननवांशफलम् ॥ लग्नोपगते सौम्येरारोग्यं भव-

ति चित्तसौख्यं च ॥ अर्थस्थैरथ चयो योधविवृद्धिस्तृतीयस्थैः ॥ ९१ ॥ वाहनसुहृदां वृद्धिश्चतुर्थगैः पंचमैश्च मित्रमंत्रबलम् ॥ रिपुनाशः षष्ठस्थैर्भृगुवर्जं सप्तमेष्वहितम् ॥ ॥ ९१ ॥ रक्षत्यायुर्निधनैः शशिवर्जं नवमगे तु जयसंपत् ॥ कर्मणि सिद्धिर्लाभो चलसंघातश्च दशमायैः ॥ ९२ ॥ भौमार्कार्किशशांकैर्लग्नवधबंधमरणसंत्रासाः ॥ अर्थक्षयो द्वितीयैस्तृतीयसंस्थैर्यशोयुतिमत् ॥ ९३ ॥ वाहनबंधवियोगमंत्रभावो रिपोर्वधश्चेति ॥ हिबुकादिषु सप्तमगैः स्वविषमनाशो भृगुसुते च ॥ ९४ ॥ मृत्युर्निधनोपगतैः सैन्यव्यसनं महन्नवमसंस्थैः ॥ कुजसूर्यौ दशमस्थौ जयदौ भंगप्रदः सौरिः ॥ दशएकादशसंस्थैः क्रूरैरंत्यगतैःस्वबलभेदः ॥ उपचयवर्ज्जे सौम्यैर्यजन्पापैर्विपर्यस्तम् (?) ॥ ९६ ॥ प्रायो जगुः सहजशत्रुदशायसंस्थाः पापाः शुभाः सवितृजं परिहृत्य चेत्थम् ॥ सर्वत्रगाः शुभफलं जनयंति सौम्यास्त्यक्तास्तसंस्थप्रमरारिगुरुं जिगीषोः ॥ ९७ ॥ गमनसमये सौम्याःकेंद्रत्रिकोणेगृहेषु चेद्दशमसहजारातिप्राप्तिस्थिताः स्फुटसद्ग्रहाः ॥ यदि च दशमे न स्यात्सौरिर्न चाष्टमगः शशी विदधति तदाप्येते सिद्धिं सुखेन यियासतः ॥ ९८ ॥ येषां रवेनवमपंचमकंटकस्थाः सौम्यास्तृतीयरिपुलाभगताश्च पापाः ॥ आयांति ते स्वभवनानि पुनः कृतार्थाः सादा द्विजातिपुपुरावधिवधयार्थाः (?) ॥ ९८ ॥ एकस्मिन्नपि केंद्रे यदि सौम्यो न ग्रहोऽस्ति यात्रायाम् ॥ जन्मन्यथवा कर्मणि

न तच्छुभं प्राहुराचार्य्याः ॥ ९९ ॥ सौम्यं दशाधिपं लग्नस्थं वाञ्छन्ति केचिदाचार्य्याः ॥ पापं चोपचयस्थं न विलग्नेऽत्र च श्लोकौ॥१००॥सौम्यग्रहेषु लग्नेषु शुभामकांत निश्चितम् ॥ पापं चोपचयं यातुरसंशयमशोभनम् ॥ १ ॥ तस्मात्पापं दशापालं यातुर्वीर्यसमन्वितम् ॥ कुर्य्यादुपचयर्क्षेषु न विलग्ने कथंचन ॥ २ ॥ तत्र विरुद्धं तेषां ते कथमन्यदशासु दास्यते सफलम् ॥ एवं फलस्य नाशो व्रजति हि सर्वस्वफललिप्सुः ॥ ३ ॥ तस्मान्नैकांयवां जातकमवलोक्य निर्दिशेच्च सदसत् ॥ श्लोकौ वृत्तं वेदं प्राहविशिष्टो मणित्थश्च ॥४॥ रक्षका वर्द्धकाश्चैव ये स्युर्जन्मनि नायकाः ॥ नान्यायानयिनिःशंको यातालग्नेषु योजयेत् ॥ ५ ॥ जन्मोदये यौबलान्वितावुपचयकंटगौ शुभप्रदौ ॥ क्रूरामपिनिसमवेतौ सौम्यैरेवसमाहूतौ ॥ ६ ॥ भवेन्नयः कारकतानसंस्थः स्वजन्मलग्नाधिपयोः शुभोऽपि ॥ करोति लग्नोपगतः स यातुर्भयं विनाशं च बहुप्रकारम् ॥ ७ ॥ जन्मोदयर्क्षनिधनाधिपतिर्विलग्ने स्यातां स सत्फलकरो गमने नराणाम् ॥ कुर्य्यान्न नीचगतमस्तमितं च लग्ने युद्धे ग्रहेण विजितं च गतत्विषं च ॥ ८ ॥ पापोऽपि लग्नोपगतो नराणां शुभप्रदः कारकतां न संस्थः ॥ तस्मात्प्रयत्नादिदमेव चिंत्यं यियासतां कारकता न यातुम् ॥ ९ ॥ जन्मेश्वरलग्नपयोर्यः शत्रुलग्नगः स सौम्योऽपि ॥ रिपुलग्नगो नेष्टः पापोपि शुभसत्सुहृद(?)त्वंपापकेश्वर-

स्यापि ॥ १० ॥ रिपुदिवसो यस्य भवेत्सौम्योपि स लग्नगो न शुभदाता ॥ पापोपि संजनयति मित्रं स्वदिने विलग्नस्थः ॥ ११ ॥ नियतगतिर्वर्णप्रमाणवैकल्यमुच्यते विकृतिः ॥ विकृतस्योलग्नगतो न शुभदः शुभदः स्वभावस्थः ॥ १२ ॥ याम्ये तनौ ज्ञः श्रवणे रविश्च यातो निशासुश्रितश्च पुष्ये ॥ पौष्णादिभाग्योरगकृत्तिकासु मंदारवागीशशिखींदुजन्मा ॥ १३ ॥ यः खेचरः शुभफलः खलु गोचराद्यैः पापग्रहोपि परिग्रहस्थितोपि ॥ केंद्रत्रिकोणभवने गमने नृपाणां संसिद्धिदः स भवति क्षमयेत्प्रयातुः ॥ १४ ॥ क्रूरोप्यनुकूलस्थः शस्तो लग्नेशुभोपि नोरिष्टः॥वक्रीनशुभः केंद्रेतदहस्तद्वर्गलग्नं च ॥१५ ॥ एकोपि वक्रोपगतो नराणां शुभोशुभोवापिचतुष्टयस्थः॥वर्गोपि तस्योदयगो विनाशं बहुप्रकारं कुरुते नराणाम् ॥ १६ ॥ उपचयकरो नराणामुपचयकरगेहगोपि नदुष्टः ॥ शुभग्रहगोवाशुभदो वक्रोयदि केंद्रगो मातुः॥ १७ ॥लग्नाचतुर्थोपिबलः शशांकोयोगं विना यंत्रबलेन याता॥लब्ध्वापि लक्ष्मीं बहुरत्नपूर्णांक्षिप्रंक्षयंयातियथाशशांकः ॥ १८ ॥ सत्याचार्यस्यमतेन बलःशस्तः शशीप्रयाणेतु ॥ दिग्वीर्येनिकेतनमिंदुःशस्तइतिजगुरन्ये ॥ १९ ॥ स्वर्क्षतुंगमूलत्रिकोणकागांकंटकेपुयावंतःस्थिताः॥ सर्वएवतेन्योन्यकारकाःकर्मगस्तुतेषां विशेषतः ॥ २० ॥जन्मसमयेशशांकोयत्तूपचयस्थाग्रहाः केचित् ॥ ते सर्वेनाताख्याः क्रूराः सौम्याश्च संचिंत्याः॥ २१ ॥इति यात्रायां ग्रहशुद्धिः॥

रविसितकुजराहुशौरिचंद्रज्ञगुरुयाताः पुरवः क्रमादिगीशाः ॥ व्रजति परिललाटगदिगीशे पठति ततोऽमवत्सरिलटस्थः ॥ २२ ॥ उपचयकर्तुर्वर्जेद्दिगीशा बलयति कंटकगे च दिक्पतौ ॥ मनसापि न दिग्बलान्विते दिगधिपतौ च ललाटसंस्थिते ॥ २३ ॥ ललाटीनाम योगोऽयं दुर्निवारः सुरैरपि॥वर्जनीयः सदा याने मुनिभिः परिकीर्तितः ॥ २४॥ लग्नेर्के व्ययलाभयोर्भृगुसुते कर्मस्थिते भूमिजे राहौ धर्मविनाशयोरविसुते द्यूनेरविसून्वोर्विधौ(?) ॥ बंधौ ज्ञे सहजार्थयोः सुरगुरौ वेधे ललाटोद्भवा योगे नाशमुपैति वामनयतिः पूर्वादिकाष्टां गतः ॥ २५ ॥ लग्नस्थश्चंडरश्मिस्तदुपरि युगतो रात्रिनाथो ललाटी धात्रेयः कर्मसंस्थो हिमकरतनयो बंधुगो द्वित्रिसंस्थः ॥ जीवो लाभव्ययस्थस्त्रिदशरिपुगुरुः सप्तमः सूर्यसूनुः सूनुः स्यात्सिंहिकाया निधननवमगः सर्वदैव प्रयाणे ॥ २६ ॥ इति ललाटीयोगचिंता ॥ सौम्यालग्नगते बुधे शिवदिशं वाचस्पतावुद्गते याम्यां भूमिसुते रवौ च दशमे पूर्वां प्रयातो नृपः ॥ आग्नेयीं भृगुजे च शीतकिरणे बंधुस्थिते वायवीं मंदे सप्तमगे च पश्चिमदिशं याति द्विपो वश्यताम् ॥२७॥ इति यात्रायां दिग्बलदिक्पतिचिंता ॥ परस्परं सौरिकुजौ रवींदू त्रिकोणगौ भार्गवलोहितौ च ॥ फलं यदुक्तं तदशेषमेव विनाश्यपक्षात्सदिशञ्जयेताम् ॥ २८ ॥ एकोऽपि सौरिज्ञसितासितानां कुर्यात्त्रिकोणे रवितोऽथवेंदुः ॥ पत्रोयनरस्तत्र न याति याता

तयोर्बलीयान्न तपस्विकाष्ठाम् ॥ २९ ॥ यात्रादिगीशा-
यदि पंचमेन्यो गृहे ग्रहो वीर्ययुतोऽवतिष्ठेत् ॥ समुप-
ताशा कथिता च भक्त्या फलानि वीर्यान्नयति स्वका-
ष्ठाम् ॥ ३० ॥ इति यात्रायां भंगयोगः ॥ व्यसनं प्राप्तो
महयदि पातविनिर्गतोऽथवा मृत्युम् ॥ वैधृतगमनेप्येवं त्र्यह-
स्पृशेप्युपदिशंत्यन्ये ॥ ३१ ॥ नावमरात्रे यायाद्दोषस्तत्रा-
धिमासकेव्यसनम् ॥ ऋत्वयनगुणसमासो न विजयाकांक्षी
नृपःप्रविशेत् ॥ ३२ ॥ विषुवत्षडशीत्यायने रिक्तासु च
वैधृतेऽप्यहोरात्रम् ॥ विष्टिषु च विष्टिमात्रं न तु यायाद्यपि
त्वरितः ॥ ३३ ॥ ऐंद्रे धनुष्यभिमुखे दिगधीश्वरे च याया-
द्युगर्त्वयनसंधिषु नाधिमासे ॥ धिष्ण्ये च वैधृतहते व्यतिपा-
तदुष्टे विष्टयां त्र्यहस्पर्शितिथावमरात्रके च ॥ ३४ ॥
नाकालवर्षविद्युत्तडित(?)धिष्टं कथंचिदपि यानम्॥आ सप्ताहा
द्दिव्यंतरिक्षभौमैस्तथोत्पातैः ॥ ३५ ॥ अकालजैः पयःपातै-
रुत्पातैस्त्रिविधैरपि॥आ सप्ताहान्न गंतव्यमपि ग्रामांतरंबुधैः॥
॥ ३६ ॥ इति यात्रायां व्यतीपाताऽकालवर्षादिचिं-
ता ॥ यात्राजसिंहतुरगोपगते वरिष्ठा मध्या शनैश्वरबुधोशन-
सांगृहेषु ॥ भानौ कुलीरवृषवृश्चिकगेतिदीर्घाशस्तौस्तु दे-
वलमतेध्वनिपृष्ठतोऽर्कः ॥ ३७ ॥ यात्रा वैशाखमासे यदि
भवति नृपः कोशहस्त्यश्वलाभो ज्येष्ठाषाढे कथंचिद्भवति च
गमनं मध्यमा कार्यसिद्धिः ॥ श्रावण्यां भाद्रमासे युवति-
गृहगते चार्थलाभः प्रदिष्टः कल्याणं देशलब्धिः सितभवन-

गते रोगशोकौ च मार्गे ॥ ३८ ॥ मासे पौषे तु यात्रा भवति नरपतेरर्थसिद्धिप्रदात्री फाल्गुन्यां मासि माघे यदि भवति गमो मध्यमा कार्य्यसिद्धिः ॥ चैत्रे कार्यप्रणाशो भवति नरपतेः शत्रुसंघप्रवृद्धिः प्राहुः सर्वे मुनींद्राः सकलफलमिदं निष्फलं प्राहुरेके ॥ ३९ ॥ इति यात्रायां मासशुद्धिः॥

वज्रे दिगीशं हृदये निवेश्य यथेंद्रमैंध्यामपरांश्च तद्वत् ॥ सशुक्लमाल्यांबरधृङ्नरेंद्रो विसर्जयेद्दक्षिणपादमादौ ॥ ४० ॥ स्नातः सितांबरधरः सुमनाः सुवेषः संपूजितामरगुरुद्विजगोदिगीशः ॥ हुत्वा प्रदक्षिणशिखं शिखिनं कृतार्शीर्गच्छेन्नृपः शकुनसूचितकार्य्यसिद्धिः ॥ ४१ ॥ हुत्वा हुताशं विधिवत्तदानीं नासाग्रसंबद्धसमग्रदृष्टिः ॥ अभ्यर्च्य देवद्विजगोत्रभ्रातॄन्ध्यायन्दिगीशं तु शनैरुपेयात् ॥ ४२ ॥ गृहाद्गृहांतरं गार्ग्यः सीम्निः सीमांतरं भृगुः ॥ शरक्षेपाद्भरद्वाजो वसिष्ठो नगराद्बहिः ॥ ४३ ॥ गंतव्यदेशाभिमुखप्रदेशे प्रस्थानमाहुः शुभदं नराणाम् ॥ न गंडदोषेप्यथ दिग्विलोमे रोगारिवृद्धिप्रदमन्यथातः ॥ ४४ ॥ कार्य्यवशात्स्वयमेवं गन्तुः केचिदाचार्य्याः ॥ छत्रायुधायभीष्टं वैजयिकं निर्गमे कुर्यात् ॥ ४५ ॥ प्रस्थाने ब्राह्मणादीनां यज्ञसूत्रमथायुधम् ॥ गंधामलफलोपेतंप्रशस्तं वृद्धिकारणम् ॥ ४६ ॥ छत्रायं ध्वजमक्षसूत्रमथवा यज्ञोपवीतं द्विजैर्वैश्यस्य स्वकदेहवस्त्रतुरगौ क्षत्रस्य खड्गो धनुः ॥ ग्रामोपांतनदीद्विजामरगृहोद्याने

मंत्रैस्तारादोषोपसमवायः ॥ ग्रहणग्रहपरिपीडितनाडीनक्ष-
त्रदोषोपशमनाय ॥ ६९ ॥ स्नानाच्छुभपुष्पसहस्रैः फलि-
नीफलचंदनोशीरैः ॥ मधपयोगुडधूमश्रृतघृतपायससंक्रमे-
णेह ॥ ७० ॥ वृद्धद्विजाय दद्यादनिष्टताराविशुद्ध्यर्थम् ॥
लवणैर्युवतिप्रतिमामभीष्टनवोदयेसूर्ये ॥ ७१ ॥ ताराशु-
भोपशमने द्विजाय दद्याच्च वृद्धाय ॥ एकत्रिपंचसप्तद्वि-
जातये दद्यात्पलानिलवणस्य ॥ ७२ ॥ क्रमशो जन्मनि
विपदि प्रत्यरिनिधनासु दोषेषु ॥ जन्मादितारकाणामशुभा-
नामशुभशांतये क्रमशः गुडधूपश्च गुडान्नं गुडं च
गुडमोदकं दद्यात् ॥ ७३ ॥ ताम्रपात्रं तिलैः पूर्णं
पूर्णं वा गव्यसर्पिषा ॥ भास्करग्रहणे दद्यान्नाडीदोषो-
पशांतये ॥ ७४ ॥ घृतकुंभोपरि निहितं शंखं नवनीतपूरि
तंदद्यात् ॥ नाड्या दोषशांत्यै दद्यादोषाकरग्रहणे ॥७५॥
गव्यपयःपरिपूर्णं नाडीदोषोपशांतये संतः ॥ दद्यात्सोम-
ग्रहणे शंखं वा शुभशक्तिं वा ॥ ७६ ॥ त्रिमधुरपरिधौतं
चंद्रमानानुमानं रजतरचितचंद्रं कांस्यपात्रांतरस्थम् ॥
कनकरचितसूर्यं सूर्यबिंबानुमानमरुणसुमसहस्रैः पूजयेद्दैव-
वेत्ता ॥ हरति दुरितमेवं राहुणा ग्रस्तभानु (?)॥७७॥ इति
तारादिस्नानदोषोपशमनहोमादिकथनप्रायश्चित्तादिचिं
ताः ॥ वास्तुज्ञानमथातः कमलभवान्मुनिपरंपरायातम् ॥
क्रियतेधुनामयेदं विदग्धसांवत्सरप्रीत्यै ॥ ७८ ॥ सर्वदोषै-
र्विनिर्मुक्तं गुणैः सर्वैरलंकृतम् ॥ प्रणम्य सर्वलोकेशं वास्तु-

लक्षणमुच्यते॥७९॥आयतं चतुरस्रं वृत्तं भद्रासनं तथा ॥चक्रं विषमबाहु स्या त्रिकोणं शकटाकृतिः ।दंडं पणवस्थानं मुरजश्च बृहन्मुखम् ॥व्यजनं कूर्मपृष्ठं च धनुः शूर्पं च षोडशम् ॥८० ॥ एवं षोडशसंस्थानं वास्तुलक्ष्यं शुभाशुभम् ॥ चिंतनीयं सदा विज्ञैरात्मश्रेयोभिलाषिभिः ॥ ८१ ॥ आयते सिद्धयः सर्वाश्चतुरस्रे धनागमः ॥ भद्रासने कृतार्थत्वं वृत्ते पुष्टिविवर्द्धनम्॥८२॥ चक्रेदारिद्र्यमेवोक्तं शोको विषमबाहुके ॥ नृपाद्भीतिस्त्रिकोणे स्याच्छकटे च धनक्षयः ॥ ८३ ॥ नश्यंति पशवो दंडे पणवे लोचनक्षतिः ॥ मुरजे म्रियते भार्या बंधुनाशो बृहन्मुखे ॥ ८४ ॥ व्यजने वित्तनाशश्च बंधे बंधनपीडनम्॥ शूर्पे धनक्षयं विद्याच्चापे चौरभयं भवेत् ॥ ॥ ८५ ॥ स्यादुन्नतिः पूर्वनते नराणां वास्तौ धनं दक्षिणत्वागतुंगे ॥ क्षयो धनानां विनते प्रतीच्यामुच्चैर्विनाशो ध्रुवमुत्तरेण ॥ ८६ ॥ प्लवो वृद्धिकरः पूर्वे धनश्चोत्तरतः प्लवः ॥ दक्षिणे च प्लवे मृत्युर्धनहानिश्च पश्चिमे ॥ ८७ ॥ बोधिद्रुमः प्राक्प्रकरोति नैस्वं व्यक्षादिरोगं दिशि दक्षिणस्याम् ॥भवेद्वटःस्त्री कुटिला प्रतीच्यामुदुंबरे ह्युत्तरतो निषिद्धिः ॥ ८८ ॥ निशानाडीपलाशश्च चिंता श्वेतापराजि-

ता ॥ कोविदारश्च सर्वत्र सर्वं निघ्नंति मंगलम् ॥८९॥ मालती मल्लिकामोचेभदंती कुंदमेवं च ॥ वास्तुन्यारोप्य लभते शस्त्रघातमिति श्रुतिः ॥ ९० ॥ अश्वकंदे च कंदश्च कदली बीजपूरकम् ॥ गृहे यस्य प्ररोहंति तद्गृहं न प्ररोहति ॥ ९१ ॥ यत्र तत्र स्थिता वृक्षाबिल्वाकमलकह्लाराः ॥ पनसो नालिकेरश्च शुभं कुर्वंति नित्यशः ॥ ९२ ॥ जयंती दाडिमारिष्टान्परित्यज्य शमीं तदा ॥ अपि होममयान्वृक्षान् वास्तुमध्ये न रोपयेत् ॥ ९३ ॥ यत्र तत्र स्थिता वृक्षा जनयंति शुभोदयम् ॥ प्रियंगुबिल्वपुन्नागशिरीषाशोककेसराः ॥ ९४ ॥ प्राच्यादिस्थे च सलिले सुतहानिः शिखिभयं रिपुभयं च ॥ स्त्रीणां दौष्टयं कलहो नैःस्वं बहुवित्तता शुभप्राप्तिः ॥ ९५ ॥ पुष्करिणी देवकुलं चेत्थं कल्पद्रुमो नदी चेति ॥ अशुभा विदिक्षु कथिताः पूर्वोत्तरयोः शुभा एव॥९६॥ शल्यज्ञानविधौ शुद्धं समं वल्मीकवर्जितम्॥ बालानामबलानांचहितं वास्तुवशाद्गृहम् ॥ ९७ ॥ चतुरस्त्रां च यां भूमिं कृत्वा बीजं वपेत्ततः ॥ तस्मिन्नेव भवे सस्ये गावस्तत्रैव चारयेत् ॥ ९८ ॥ तासां मूत्रशकृत्पातैः पुण्यं भवति तच्छुभम् ॥ सूचयित्वा नवखंडं वास्तुं कुर्य्याद्विचक्षणः ॥ ९९ ॥ नवमेति तथा भागे गृहं कुर्य्याद् प्रयत्नतः ॥ सूत्रे विस्तार्य्यमाणे तु दीप्ताग्निर्यदि दृश्यते ॥ १०० ॥ पुरो वा घोटकारूढो भवेद्राष्ट्रमसंशयम् ॥ शंखतूर्य्यादिनिर्घोषैर्वस्तुभिर्विपुले गृही ॥ १ ॥ योषितां

कन्यकानां च क्रीडिते पित्तवर्द्धनम् ॥ ध्वजवस्त्रपताकानां दर्शने निधिवस्त्रदः ॥ २ ॥ पूर्णकुंभे सुतप्राप्तिः स्थैर्य्यं कलशनिध्वनौ ॥ सूत्रे पेदे मृत्युः कीले चावाङ्मुखे रोगः ॥ ३ ॥ गृहनाथस्थपतीनां स्मृतिलोपे मृत्युरादेश्यः ॥ गृहमध्ये हस्तमितः खातो जलैः पूरितस्तथा ॥ ४ ॥ श्वभ्रं न्यूनमनिष्टं समे समं धन्यमधिकं यत् ॥ श्वभ्रमथवा-नुपूर्णं पदशतमित्वागतस्य यदि भावम् ॥ ५ ॥ तद्वन्यं यद्वेतमसंतिदान्याधकं (?) पुष्टिः ॥ रवावग्निः कुजे नाशं शशिनि दरिद्रं शनौ क्षुधा ॥ ६ ॥ सुरगुरौ भार्गवे सौम्ये गृहाः प्रायो मनोरमाः ॥ न कोणेषु गृहं कुर्य्यान्नोपांते नापि मध्यतः ॥ ७ ॥ कोणे च धनहानिः स्यादंते रिपु-भयं भवेत् ॥ मध्ये सर्वविनाशः स्यात्तस्मादेतान्विवर्ज-येत् ॥ ८ ॥ नैर्ऋत्यकोणे बालभयं वनिताक्षयं च ॥ वायव्ये श्रेष्ठं गृहं न कर्त्तव्यं यदीच्छेदात्मनो हितम् ॥ ९ ॥ सर्पाकारं भवेद्वास्तु पार्श्वेनेव व्यवस्थितम् ॥ शिरसा पृष्ठ-पुच्छाभ्यां संस्पृशेत्सगृहत्रयम् ॥ ११० ॥ शयानो वाम-पार्श्वेन भवेन्नित्यं न संशयः ॥ पूर्वभागे शिरस्तस्य उत्तरे पृष्ठमेव च ॥ ११ ॥ पश्चिमे च तथा पुच्छं शतभद्रपदादिषु ॥ दक्षिणे तु विजानीयान्मार्गशीर्षादिषु त्रिषु ॥ १२ ॥ पश्चिमे फाल्गुनाद्येषु ज्येष्ठादिषु तथोत्तरे ॥ न शिरःपृष्ठपु-च्छेषु सदनं कारयेद्बुधः ॥ १३ ॥ क्रोडे तु क्रियते नित्यं हिताय भवनं बुधैः ॥ न शिरःपृष्ठपुच्छेषु आत्मनः शुभमि-

च्छता ॥ १४ ॥ पंचास्ये गुणवह्नयः शिखिदिशो नंदाष्टका दक्षिणे तस्मादंगरसा वृषे वसुनगा वाणेषवो गर्दभे ॥ कौबेरे रसपर्वताः शिवगृहे वेदा द्वयेऽनुक्रमादेते नामहता ह्रताश्च वसुभिर्दैत्यार्णवं स्वेच्छया ॥ १५ ॥ विस्तारायतपिंडं द्विगुणीकृत्वार्धहस्तसंयुक्तम् ॥ वसुभिर्भागविशुद्धं शेषगृहं प्रादिशेत्प्राज्ञः ॥ १६ ॥ आयामसंगुणितविस्तरहस्तराशिं हत्वा तमेव नवभिर्वसुभिर्विभज्य ॥ सर्वं च तैरपि हरिन्नियमं गृहाणामर्थो जयश्च स तथा क्रमलब्धिमायुः ॥ १७ ॥ पिंडमगुणीकृत्य त्रिपानुन ( ? ) विभाजयेत् ॥ शेषं नक्षत्रमुद्दिष्टं कृत्तिकादिव्यवस्थया ॥ १८ ॥ ध्वजो धूमस्तथा सिंहस्तथाश्वोवृषभः खरः ॥ गजो ध्वांक्षो गृहाः प्रोक्ता दिक्षु प्रागादिषु क्रमात् ॥ १९ ॥ नायेवचेदिच्छेत्तर्जन्यादिस्तरं कुरु ॥ अंतरालं च तत्रापि त्याज्यं हस्तचतुष्टयम् ॥ १२० ॥ एका चेद्दक्षिणाशाला द्वे च दक्षिणपश्चिमे ॥ तावत्पूर्वं न कुर्वीत यावन्नोत्तरतो भवेत् ॥ २१ ॥ सिद्धार्थमपरं याम्ये यमसूर्यं पश्चिमोत्तरे शाले ॥ दंडाख्यमुदकपूर्वेप्राचीयाम्ये च वाताख्यम् ॥ २२ ॥ पूर्वापरेचशाले गृहचुल्लीदक्षिणोत्तरे का च ॥ सिद्धार्थेर्थप्राप्तिर्यमसूर्ये गृहपतेर्मृत्युः ॥ २३ ॥ दंडाख्ये दंडभयं कलहो द्वेषः सदैव वाताख्ये ॥ धनहानिर्गृहचुल्ल्यां ज्ञातिविरोधः स्मृतः काचे ॥ २४ ॥ उत्तरशालाहीनं हिरण्यलाभं विशालकं धन्वम् ॥ प्राक्छालया नियुक्तं सक्षेत्रं वृद्धिदं वास्तु ॥ २५ ॥ याम्याहीनं चुल्लीत्रिणालकं

वित्तनाशकरंमतम् ॥ पक्षघ्नमास्यवर्जिततंतवयधंसवैरकरम् ॥ २६ ॥ ईशान्यां देवनिलयमाग्नेय्यां च महानसम् ॥ उपस्करं तु नैर्ऋत्यां वायव्यां कोशमंदिरम् ॥ २७ ॥ यो गृहकर्त्ता पुरतः प्रांतमंदिरगतं कुर्य्यात् ॥ न भवेदर्थविवृद्धी रिपुकुलवृद्धिर्भवेत्तस्य ॥ २८ ॥ चतुःषष्टिपदे वास्तोः शंकरादिदिशः क्रमात् ॥ प्रदक्षिणे दिक्क्रमतो द्वाराणां फलमुच्यते ॥ २९ ॥ अनलभयं स्त्रीजन्म प्रभुत्वचनिताधनं सुतवीर्यघ्नं च याम्ये स्यात् ॥ सुतपीडा रिपुवृद्धिर्धनसुतनाशः सुतार्थफलसम्पत् ॥ १३० ॥ धनसंपन्नृपतिभयं धनक्षयो रोगपीडाच ॥ वधबंधौ रिपुपीडा धनसुतलाभः समस्तगुणसंपत् ॥ ३१ ॥ उच्छ्रायाद्विगुणमिता यात्राभूमिर्न दोषाय ॥ सचिवालयेर्थनाशो धूर्त्तगृहे सुतवधः समीपस्थे ॥ ३२ ॥ उद्वेगो देवकुले चतुष्पथे भवति चाकीर्तिः ॥ चैत्रभयं गृहकृतं वल्मीके शत्रुसंकुले विपदः ॥ ३३ ॥ गर्तायां क्षुत्पिपासा कूर्माकारे धनविनाशः ॥ अथ ग्रंथान्तरे गृहकरणविहितनामादिकम् ॥ ॥ ३४ ॥ गृहं न कोणेषु न वांतमध्ये कुर्य्याद्यदीच्छेद्विपुलां समृद्धिम् ॥ कोणे नाशोग्निभयं तथांतर्मध्ये विनाशो गृहिणां तथा स्यात् ॥ ३५ ॥ मासाः श्रावणवैशाखमाघकार्तिकफाल्गुनाः ॥ प्रशस्तास्ते गृहारंभे पत्नीपुत्रसमृद्धिदाः ॥ ३६ ॥ नाशो भाद्राश्विने मासि मासि चैव धनक्षयः॥ज्येष्ठे तु द्रव्यहानिः स्यादाषाढे मरणं पशोः॥ ३७॥

पौषे मासि भवेन्मृत्युश्चैत्रे चैव रिपोर्भयम् ॥ धनं स्याच्छेषमासेषु सर्वकामफलं भवेत् ॥ ३८ ॥ शिलेष्टिकादिगेहानि न कुर्यान्मासि गर्हिते ॥ तृणकाष्ठादिगेहानां मासदोषो न विद्यते ॥ ३९ ॥ निषिद्धेपि हि काले तु सानुकूले शुभे दिने ॥ तृणवस्त्रगृहारंभे मासदोषो न विद्यते ॥ ॥ १४० ॥ पूर्णिमातोऽष्टमीयावत्पूर्वास्यं वर्जयेद्गृहम् ॥ उत्तरास्यं न कुर्वीत नवम्यादिचतुर्दशीम् ॥ ४१ ॥ अमावास्याष्टमीयावत्पश्चिमास्यं विवर्जयेत्॥ नवम्याश्च ततो याम्यां यावच्छुक्लचतुर्दशीम् ॥ ४२ ॥ शशिनि भवति पुंस्त्वं भास्करे वित्तनाशो बहुवसु रविसूनौ भूमिपुत्रे विनाशः ॥ बुधगुरुकविवारे धर्मकामार्थलक्ष्मीरिति वदति वराहो मालिनी वृत्तिरेषा ॥ ४३ ॥ चित्राशतभिषास्वातीहस्तःपुष्यःपुनर्वसुः ॥ रोहिणीरेवतीमूलाश्रवणोत्तरफाल्गुनी ॥ ४४ ॥ धनिष्ठा चोत्तराषाढा भाद्रपदोत्तरा चित्रा ॥ अश्विनीमृगशीर्षा चानुराधांतं तथैव च ॥ ४५ ॥ वास्तुपूजनमेतेषु नक्षत्रेषु करोति यः ॥ समाप्नोति नरो लक्ष्मीमिति प्राह पराशरः ॥ ४६ ॥ नाशं प्रयाति मकरालिकुलीरलग्ने मेषे घटे धनुषि कर्मसु दीर्घसूत्रम् ॥ कन्याझषे मिथुनके ध्रुवमर्थलाभो ज्योतिर्विदः कलशसिंहवृषेषु सिद्धिम् ॥ ॥ ४७ ॥ पूर्वाषाढे शिरसिते भार्गे दक्षिणमस्तकः ॥ फाल्गुने वारुणे शेते ज्येष्ठ उत्तरमस्तकः ॥ ४८ ॥ ऊर्द्ध्वं भागद्वयं त्यक्त्वा अधो भागद्वयं तथा ॥ मध्येनाभिं वि-

जानीयादित्यूचे वाक्पतिः पुरा ॥ ४९ ॥ विस्तारगुणितं दैर्घ्यं देवस्थानधृतं तथा ॥ विश्वाश्विभूपनागघ्नं सूर्य्याष्टनवभैर्हृतम् ॥ १५० ॥ अथो व्यायध्वजादीनि नक्षत्रं कृत्तिकादिकम् ॥ तथा चाहभृगुः॥विस्तारगुणिते दैर्घ्ये वसुभिः भाजितेधिकम् ॥ ५१ ॥ गृहमष्टविधं दिक्षु पूर्वादिषु यथाक्रमम् ॥ ध्वजो धूम्रश्च सिंहश्च वृषोगर्दभएव च ॥ गजो ध्वांक्षश्च पूर्वादिक्रमेणैतानि नामतः ॥ ५२ ॥ ध्वजे बहुधनं प्राप्तं धूमे चैव भ्रमो भवेत् ॥ सिंहे च विपुला लक्ष्मीः शून्ये च कलहो ध्रुवम् ॥ ५३ ॥ धनं धान्यं वृषे प्रोक्तं खरे स्त्रीणां च विप्लवम् ॥ गजाख्ये पुत्रलाभः स्याद्ध्वांक्षे च सर्वशून्यता ॥ ५४ ॥ ध्वजमिन्द्रदिशे भागे सदाग्नेयेमहानसम् ॥ शयनस्य गृहं याम्ये नैर्ऋत्यामायुधस्य च ॥ ५५ ॥ श्रीगृहं पश्चिमे भागे वायव्यां कोशमंदिरम् ॥ शालोदीच्यां गृहादीनां ध्वांक्षे देवगृहं भवेत् ॥ ॥ ५६ ॥ स्वामिहस्तप्रमाणेनाद्यक्षपत्नीकरेण च ॥ गर्भमात्रं भवेद्देहं नृणां प्रोक्तं पुरातनैः ॥ ५७ ॥ इति वास्तुलक्षणम् ॥ रविशुद्धौ गृहकरणं रविगुरुशुद्धौ व्रतोद्वाहौ ॥ क्षौरं ताराशुद्धौ शेषं चंद्राश्रितं कर्म ॥ ५८ ॥ आदित्यद्वयरोहिणीमृगशिरोहस्तो धनिष्ठोत्तरा पौष्णं विष्णुमघानुराधपवनैः शुद्धैः सुतारान्वितैः ॥ सौम्यानां दिवसेऽन्यपापरहिते योगे विरिक्ते तिथौ विष्टित्यक्तदिने वदंति मुनयो वेश्मादिकार्य्यं शुभम् ॥ ५९ ॥ शुद्धैर्द्वादशकेंद्रनैधनगृहैः

पापैस्त्रिषष्ठायगैर्लग्ने केंद्रगतेऽथवासुरगुरौ दैत्यस्य पूज्येऽथवा॥ सर्वारंभफलप्रसिद्धिरुदयो रात्रौ च कर्त्तुः शुभे सुग्राम्यस्थिरभोदयेषु भवनं कार्य्यं प्रवेशोऽपि वा॥ १६०॥ तद्रस्ना (?) यतगर्भमात्रमतुलं कर्तुर्विशुद्धे दिने स्नात्वा रत्नसुवर्णराजतमयैः कुद्दालकैः शिल्पिभिः ॥ कृत्वा शाद्वलगोमयैः शुचितरं रम्यं तथा दर्पणैः प्रागाद्यैः शुभ्ररत्नगर्भकलशैश्चित्रांबरावेष्टितैः ॥ ६१ ॥ व्यालोलनवचूतपल्लवमुखैः शंखांबुपूर्णोदरैर्दिक्पालाह्वयगर्भितैः श्रुतिपदैर्मंत्रैः समभ्यासवैः ॥ नानामूलफलाक्षतान्यवदधिप्रोद्भिन्नबीजांकुरैर्लाजास्वस्तिकपूर्णपात्रकुसुमैर्मत्स्यैश्च पुच्छोच्छलैः ॥६२॥जीवन्मीनयुगं विधाय हरतः सन्नोपपूर्णं घटं सचामीकरवारिजन्मसहितं सचूतशाखामुखम्॥भास्वद्दीपदधिप्रियामलफलं ते ते प्रसन्नेंद्रियो दद्यादर्घ्यमनर्घ्यविप्रवचसां मंत्रेण वास्तोष्पतीन्॥६३॥सद्रत्नपाणिःप्रयतः समाहितो नभुक्तशुक्लांबरपुष्पपूजितः ॥ सुखोपविष्टः कलशांभसा कृतां दद्यादसावर्घमविघ्नहेतवे ॥ ६४ ॥ गर्त्ते तस्मिन्सलिलभरिते निश्चलं वारिभर्त्तुः स्थैर्य्यं कुर्य्याज्जनयति हितं दक्षिणावर्त्तरोगात् ॥ वामावर्तं भवति विपदे सोपि नाशं विदध्याद्भूमिच्छेदाद्धजतिलघुतां वित्तनाशंगरीयः ॥ ६५ ॥ भस्मास्थिकाठतुषकेशकपालदंतरक्तंस्रवेच्च यदि वाथशिलाश्च लोष्ठम् ॥ धूमाकुलंभवतिगर्तविशुद्धिगत्वा-तस्मिन्वदंति मुनयो धनपुत्रनाशम् ॥ ६६ ॥ सूत्रे विस्तार्य्यमाणे यदि रसति शिवा दृश्यते धूमकुंभः कुंभो नि-

भेंदमेति प्रसरति रुदितं श्रूयते गृध्रशब्दः ॥ नाशो भर्तुस्तदा स्यान्निपतति भवने भेकनेदैवहष्ट्या गर्ते नानास्ति शल्यं व्यसनशतकरं गर्दभेनार्दनैश्च ॥ ६७ ॥ धरण्याक्रांते तस्मिन्सत्यं गृहिणो भयं भवेद्भुजगात् ॥ भवति च सततं छिन्ने बंधच्छेदो न संदेहः ॥ ६८ ॥ दृष्टेपुगातिहुताशे तुरगारूढे च पीने च ॥ राष्ट्रमवाप्नोतिगृही नित्यं च पुत्रवित्तसंपन्नः ॥ ६९ ॥ छत्रं यत्र पातका वा हास्यं स्त्रीणां च दृश्यते ॥ क्रीडितं यत्र वाहानां नहि तत्र महाधनम् ॥ ७० ॥ क्षीरिणां फलकं कुर्याद्भुणं वा गुणवर्जितम् ॥ कौशेयं साधुसूत्रं स्याद्यातिभिन्नं च वर्जयेत् ॥ ७१ ॥ स्नात्वा चेत्पुनरागतः पदशतं स्वास्थाद्वितीयं पुमान् पश्चादीशकुबेरदक्षिणमुखं संपूर्णसंघट्टनम् ॥ संग्रामे विजयं धनांबरयशोवृद्धि पशूनां परा भर्तुर्लक्षणलक्षकः पटुमतिर्ब्रूयाद्भृशं यत्र च ॥ ॥ ७२ ॥ इति ग्रहार्चाविधिः ॥ पौष्णे धनिष्ठास्वथवारुणेपु स्वयंभुवर्क्षे त्रिपु चोत्तरेपु ॥ अक्षीणचंद्रे शुभवासरेपु तिथावरिक्ते च ग्रहप्रवेशः ॥ ७३ ॥ वस्वर्क्षे वरुणे पौष्णे रोहिण्यामुत्तरासु च ॥ कुर्याद्गृहप्रवेशं तु शस्ते तिथ्यादिके बुधः ॥ ७४ ॥ धिष्ण्येपु पौष्णकरवैष्णवरोहिणीपु पुष्योत्तराश्विनियुतेपु शिलानिवेशः ॥ कार्य्याश्विवारुणवसूत्तररेवतीपु पद्मोद्भवर्क्षसहितेपु गृहप्रवेशः ॥ ७५ ॥ हस्तः पुष्यपुनर्वसू शताभिषा स्वाती तथा रेवती रोहिण्युत्तरशांकरा हरिमृगा मूलाधनिष्ठा मघा ॥ कन्याकुं-

भवृपालिसिंहमिथुनस्वर्क्षाः स्युराशुद्रमे वा राजीवशनिज्ञसोमभृगुजा वेश्मप्रवेशे शुभाः ॥ ७६ ॥ शुद्धे स्वात्यचतुष्टयाष्टमगृहेष्वायेति शत्रुस्थिते क्रूरैः कंटकधर्मपंचमगते शुक्रेऽथ वा वाक्पतौ ॥ लग्ने सत्फलदेवकर्तुरखिलप्रारंभसिद्धिर्भवेत्कार्य्यं ग्रामनिजस्थिरे सुभवनं लग्ने प्रवेशोऽपि च॥७७॥ केंद्रेषु सौम्यैर्गुरुशुक्रलग्ने पापेषु केंद्राष्टमवर्जितेषु ॥ ग्राम्ये स्थिरे वा निधने विलग्ने गृहं विशेच्छीतकरेऽनुकूले॥७८॥भूरिपुष्पनिकरं सुतोरणं तोयपूर्णकलशाभिशोभितं॥गंधपुष्पबलिपूजितामरं ब्राह्मणध्वनियुतं विशेद्गृहम्॥७९।पश्चात्कांचनरूप्यवस्त्रकुसुमैः संपूजयेत्सादरं दैवज्ञं सह शिल्पिभिर्द्विजगुरूंश्चंधूंस्तथान्यानपि॥गत्वा वेश्म पुराणधर्मकथया वासं वसेत्सद्मने रात्रौ धर्मविशुद्धशांतहृदयो निद्रां निषेवेदसौ ॥ ८० ॥ इतिगृहप्रवेशः ॥ वापीतडागगृहगोपुरदेवसद्मप्रासादकूपवटवारिविहारचैत्यान् ॥ कर्तुं यथागमविधानि विधिर्विधात्रा प्रोक्तस्तथैव कथयामि समासतो हि ॥ ८१ ॥ कर्तुः शुभे दिनपतौ रजनीपतौ च पक्षे सिते शुभतिथावसितांतभागम् ॥ त्यक्त्वाऽथ वैधृतदिनं व्यतिपातयुक्तमुत्पातदूषितमथापरदोषदुष्टम् ॥ ८२ ॥ कीर्त्यारंभे प्रतिष्ठाया मथवा गृहकर्मणि ॥ तारार्केंदुमुहूर्तानां बलयोगस्तु कथ्यते ॥ ८३ ॥ दद्यादर्घं रवेः शुद्ध्यै कीर्तिनां दुर्गृहस्य च ॥ प्रतिष्ठासु सुरादीनामन्यशुद्धिः प्रतीक्ष्यते ॥ ८४ ॥ कर्तुः शोभनसंस्थे दिवसे चंद्रे शुभारंभे॥पक्षे सिते(?)त्यक्तोत्पा-

तैर्हतं दिवसम् ॥ ८५ ॥ रविधनपितृमैत्रे रेवतीपुष्ययुक्ते हिमकरहरिशक्रैर्ब्रह्मचित्रोत्तरासु ॥ हरिवृषकलशालिस्त्रीपु सत्सूदयेपु शुभदिनसितपक्षे लग्नभागे शुभे वा ॥ ८६ ॥ राधेशहस्तहरिशाक्रसमीरणेपु पौष्णेंदुमित्रगुरुमूलशिवोत्तरेपु ॥ व्यंते (?) तिथौ शुभदिने शशिनि प्रशस्ते धन्या वदंति मुनयो विविधप्रतिष्ठाम् ॥ ८७ ॥ आदित्यं युगोत्तरयुगले कमलासनमित्रचंद्रे योगेचेद्भवति समाहितशुद्धिसुब्रह्मोत्तरादिनकराधिपपाश्चविष्णुवाताश्वितिष्यभरणीभवसोमभानि ॥ सौम्याविहगेंद्रदिनेपु देवसंस्थापनेसमभिवांछितसिद्धिदानि(?) ॥ ८८ ॥ वह्नेर्भयं भवति भानुदिनेऽर्थनाशः सौरेरपि क्षितिसुतस्य च वज्रपातः ॥ प्रासादसद्मपुरपुष्करिणीक्रियासु धर्मार्थसिद्धिरतुला हि शुभग्रहाणाम् ॥ ८९ ॥ प्रासादवापीभवनक्रियासु क्रूरग्रहाणां दिवसे नराणाम्॥ कार्यप्रणाशोऽप्यशुभं शुभानां धर्मार्थसंतानसुखप्रवृद्धिः ॥ ९० ॥ वसुवृंदारकाचार्यब्रह्मविष्णुपुरंदरम् ॥ मुहूर्ताः कथिताः शस्ता शेषा भूयो भयावहाः ॥ ९१ ॥ शस्तं ताराधिपेऽर्के कुशलफलकरं वासवेचे नराणां पृथ्वीपुत्रादिपापैस्त्वपचयगृहगैः स्वस्थितिस्थानलग्नैः ॥ केंद्रे कोणेपि सौम्ये स्फुटतरकिरणालंकृताकारदेशप्रासादोद्यानवापीपुरनगरगृहारंभणेपु प्रशस्तम् ॥ ९२ ॥ जीवे धर्मार्थकामाः स्युः पुत्रोत्पत्तिश्च भार्गवे ॥ चंद्रजे कुशला शक्तिः सचिरायुः प्रवर्त्तते ॥ ९३ ॥ द्वितीयस्थे रवौ हानिश्चंद्रे शत्रुभयं भवेत् ॥ भू-

मिजे वंचनं प्रोक्तं नानाविद्यानि भानुजे॥९४॥ बुधे द्रविणसं पत्तिर्गुरौ धर्मप्रवर्द्धनम्॥यथाकामं विनोदेन भृगौ कामं व्रजेत्फलम् ॥ ९५ ॥ तृतीयस्थेषु पापेषु सौम्येष्वपि विशेषतः ॥ सिद्धिः स्यादचिरादेव यथाभिलषितं प्रति ॥ ९६ ॥ चतुर्थस्थानगे जीवे पूजा संपद्यते क्रमात् ॥ चंद्रजे चार्थलाभः स्याद्भूमिलाभस्तु भार्गवे ॥ ९७ ॥ वियोगः सुहृदां भानौ मित्रभेदो महीसुते ॥ बुद्धिनाशो निशानाथे सर्वनाशोऽर्कनंदने ॥ ९८ ॥ पंचमस्थे सुराचार्ये मित्रबंधुधनागमः ॥ शुक्रे पुत्रसुतावाप्ती रत्नलाभस्तथेंदुजे ॥ ९९ ॥ सुतदुःखं सहस्रांशौ शशांके कलहः स्मृतः ॥ भौमे कार्य्यविरोधः स्यात्सौरे बंधुविवर्द्धनम् ॥ २००॥ षष्ठस्थानस्थिते सूर्य्ये रोगनाशं विनिर्दिशेत् ॥ चंद्रे पुष्टिः कुजे प्रातिः सौरे शत्रुबलक्षयः ॥ १ ॥ गुरौ मंत्रोदयः प्रोक्तो भृगौ विद्यागमो भवेत् ॥ सर्वज्ञानार्थकौशल्यं नक्षत्रपतिनंदने ॥ ॥ २ ॥ सप्तमस्थानगे जीवे बुधे दैत्यपुरोहिते ॥ गजवाजिधरित्रीणां क्रमाल्लाभं विनिर्दिशेत् ॥ ३ ॥ भास्करे कीर्तिभंगः स्यात्कुजे विपदमादिशेत् ॥ हिमगौ क्लेश आयासः तंगे व्यंगता भवेत् ॥ ४ ॥ निधने च सहस्रांशौ चिद्विषां ननिरापदः ॥ हानिः शीतमयूखे भौमे सौरे च रुग्भयम् ॥ ॥ ५ ॥ बुधे मानधनप्राप्तिर्जीवे च विजयो भवेत् ॥ शुक्रे स्वजनभेदः स्यान्मित्रज्ञस्यापि देहिनः ॥ ६॥ वागीशे नवमे स्थाने विद्यायोगादिनंदनम् ॥ बुधे मानधनप्राप्तिर्जीवे

च विजयो भवेत् ॥ ७ ॥ चंद्रे धातुक्षयः प्रोक्तो धर्महानिश्च भास्करे ॥ कुजे वार्थक्षयं विद्याद्रविजे धर्मदूषणम् ॥८॥दशमस्थानके शुक्रे शयनाशनसिद्धयः ॥ सुराचार्य्ये महासौख्यं विजयः स्त्रीधनं बुधे ॥ ९ ॥ मार्त्तंडे च महावृद्धिश्चंद्रे कोशविवर्जनम् ॥ भौमे रत्नागमः प्रोक्तः कोणे कीर्तिविलोपनम् ॥ १० ॥ लाभस्थानेषु सर्वेषु लाभस्थानं विनिर्दिशेत् ॥ व्ययस्थानेषु सर्वेषु विनिर्दिशेद्व्ययः सदा ॥ ॥ ११ ॥केंद्रे त्रिकोणभवनेषु शुभग्रहेषु पापेषु षट्त्रिदशलाभगृहस्थितेषु ॥लग्नेषु जन्मतनुजास्थिरमंदिरेषु वेश्मानि कीर्तिकरणानि शुभप्रदानि ॥ पराशराद्यैः प्रतिपद्द्वितीयात्रयोदशीपंचदशीदशम्यः ॥ एताः प्रशस्तास्तिथयः सदैव सप्तम्यपि स्याभिमतैव षष्ठी ॥ १२ ॥ निशि शस्ता प्रतिष्ठा च प्रशस्ता सफला भवेत् । विपरीता कृता या च प्रत्यनीकफलप्रदा ॥ ॥ १३ ॥ इति प्रतिष्ठाविधिः ॥ हस्तो मघानुराधापुष्यधनिष्ठोत्तराणि रोहिण्यः ॥ शतभिषगिति प्रारंभे कूपानां शस्यते भगणः ॥ १४ ॥ हस्तमैत्रमघापुष्यधनिष्ठोत्तरवारुणैः ॥ प्राजापत्येऽत्र कूपानां खननं मुनिभिः स्मृतम् ॥ १५ ॥ आग्नेये दिक्कोणे ग्रामस्य पुरस्य वा भवति कूपः ॥ नित्यं स करोति भयं दाहं च समानसं प्राह ॥ १६ ॥ नैर्ऋत्ये बालभयं करोति वनिताक्षयं च वायव्ये ॥ दिक्त्रयमेतत्त्यक्त्वा शेषाश्च शुभावहाः कूपाः ॥ १७॥ स्वादु स्वच्छं लघु स्निग्धं स्थिरमंभः शुभांशके ॥ १८ ॥ इति

कूपखननविधिः ॥ नक्षत्रैस्त्रिभिरुत्तरैर्गुणयुतैः पक्षे सिते सर्वदा रोहिण्यां च सुवातभद्रकथितावन्यैश्वयोगोत्तमैः ॥ स्थानेष्वेषु महीरुहां गुणवतां पुंसां दयायोगतां क्षिप्रं वृद्धिमवाप्नुवंति बहुशः पुष्पैः फलैः संयुताः ॥ १९ ॥ अनिलोत्तररोहिण्यां मृगमूलपुनर्वसौ ॥ पुष्यश्रवणहस्तेषु कृषिकर्म प्रशस्यते ॥ २० ॥ रोहिण्यामथ हस्ते च ज्येष्ठामूलोत्तरासु च ॥ बीजं तु वापयेद्धीमान्यदीच्छेत्सस्यसंपदम् ॥ २१ ॥ इति कृषिकर्म ॥ शतभिषगुत्तरकमलजमूलेंद्राश्विहरिभेषु शुभेषु ॥ वाक्पतिसितशशिदिवसोदयेषु तरुरोपणं शस्तम् ॥ ॥ २२ ॥ इति वृक्षरोपणम् ॥ ऊर्द्ध्वाननानि चतुराननविष्णुरुद्रचंद्रांतकोत्तरधनानि भवंत्यमूनि ॥ प्रासादतोरणपुरादिविहारकर्मकर्माण्यनेकविधसौख्यशुभप्रदानि ॥ २३ ॥ पार्श्वाननान्यदितिवासवमैत्रचित्रापौष्णाश्विनीवरुणवातखरांशुभानि ॥ गोवाजिदंतिदमनप्रियदर्शनानि सप्तप्रवेशकरणे च हितप्रदानि ॥ २४ ॥ याम्याहिवह्निपितृपूर्वविशाखमूलान्येतान्यधोवदनकानि भवंति भानि ॥ कूपप्रवापीबिलगृहखन्युपातघूतच्छलोपकरणेषु हितप्रदानि ॥ २५ ॥ इत्यूर्द्ध्वमुखादिनक्षत्रचिंता ॥ ऋक्षेपूत्तरपौष्णवैष्णवमघामूलानुराधाश्विनीप्राजापत्यकरद्विदैवतगुरुप्रालेयपादेषु च ॥ निर्दोषैर्वृषभैर्हलैश्चसुमनोमालाभिरभ्यर्चितो दत्वा क्षेत्रपतेर्बलिं हलधरः क्षेत्रं ततः कर्षयेत् ॥ २६ ॥ सब्रह्मादितिपौष्णमित्रयुगलस्वातिश्रवोवारुणे मूलादित्यमघोत्तरामुनिवरैः

प्रोक्ताः प्रशस्ताः परम् ॥ बीजप्राकिरणे हलप्रवहणे पांशुक्रियारोपणे सूर्य्याचार्य्यसितेंदुबोधनदिने लग्नेऽनुकूले ग्रहे ॥ ॥ २७ ॥ रोहिण्यां चैव हस्तेषु ज्येष्ठामूलोत्तरेषु च ॥ धान्यानि वापयेद्विद्वान्यदीच्छेच्छस्यसंपदम् ॥ २८ ॥ प्राजेशश्रवणोत्तरादितिमघामार्तंडतिष्याश्विनी पौष्णानुष्णमरीचयः शतभिषक्स्वाती विशाखा तथा ॥ २९ ॥ जीवार्केंदुसितेंदुनंदनदिने लग्ने स्थिरे चोदये शस्यानां वपने तथैव लवने शस्तास्तथारोपणे ॥३०॥ हस्ते च वापयेद्वीजं संग्राहो वैश्वदेवते ॥ रोहिण्यां मर्दनं कुर्य्यादुत्तरासु प्रवेशयेत् ॥ ॥ ३१ ॥ सौरे दिने सलिलकीटभयस्य वृद्धिर्भौमे भयं भवति मूषकजं च तेषाम् ॥ बीजप्रवापणविरोपणलावकानां कुर्यात्कृषिं तनुविहीनदिने तु चंद्रे ॥ ३२ ॥ गुरुरविशशिसौम्ये शुक्रवारेषु विद्वान्यदिसुनियतयुक्ते भूमिभागप्रदेशे ॥ सकनकजलबीजं गृह्य मुष्टित्रयं च सरुचिररचितचेता वापयेच्छक्रचिंताम् ॥ ३३ ॥ रौद्रे मैत्रेऽथवा सौम्ये धान्यं स्यादनुकूलतः ॥ छेदितव्यं सदा प्राज्ञैर्लग्ने चैव गुरूदये ॥ ३४ ॥ मीनलग्ने शुभे ऋक्षे निधने चंद्रवर्जिते ॥ क्षेप्तव्यं कोष्ठके धान्यं गर्गो वदति सर्वदा ॥ ॥ ३५ ॥ सुकृष्टे च सुवृष्टे च सुक्षेत्रे विधिदर्शनम् ॥ सुभिक्षं सततं यस्मात्तस्मात्कामदुघा कृषिः ॥३६॥ श्लेष्मातकी शाल्मलिसप्तपर्णी औदुंबरी चैव तथा च धात्री ॥ न्यग्रोधशाखा विमलाविपाशा पड्भिः सुमेधा कथिता

प्रशस्ता॥ ३७ ॥ नाल्पा न हीना न च दीर्घशाखा न प्रांतरे चैव न मार्गदेशे ॥ रथ्याप्रदेशे कुहरे न निम्ने भीरुप्रदेशे षड-कोणकार्यः(?) ॥ ३८ ॥ नित्यं दशहले लक्ष्मीः नित्यं पंचह-ले धनम् ॥ नित्यं हि त्रिहले भक्तं नित्यमेकहले शणम् ॥ ॥ ३९ ॥ याम्योत्तरं त्रिदशमं त्रिहिरण्यगर्भसौम्यप्रभंजनदि-नाधिपनैर्ऋतेषु ॥ एतेषु भेषु गुणवत्सु यथा निधानं धान्या-दिधारणमिहोपदिशंति संतः ॥ ४० ॥ इति कृषिप्रक-रणम् ॥ नंदायां भार्गवदिने त्रयोदश्यां त्रिजन्मनि अन्नश्रा-द्धं न कुर्वीत पुत्रदारधनक्षयात् ॥ ४१ ॥ न नंदायां न मघायां न त्रिजन्मभेषु बुधः ॥ भूमिजभृगुशनीनां दिना-नि नैव शुभाशंसि ॥ ४२ ॥ हरियुगले दितियुगले पौ-ष्णयुगले विरंचियुगले च ॥ करपंचकोत्तरेषु च बुधो हि नोष्वेषु नवमयात् (?) ॥ ४३ ॥ इति नवान्नभक्षणम् ॥ हस्तादितिश्रवणसोमसमीरणेषु मूलानलद्रविणवारुणवासवेषु ॥ भैषज्यपीतमचिरादुपहृत्य दोषान् कंदर्पकल्पवपुषं पुरुषं क-रोति ॥ ४४ ॥ मूलानलानिलसुरेंद्रसुरेज्यचंद्राः पौष्णाश्वि-नीद्रविणकेशवमित्रचित्राः ॥ भैषज्यलक्षणविधौ नियतं नरा-णां विघ्नंत्यरिष्टशतमप्यचिरात्तुमुल्यम् ॥४५ ॥ श्रवणानिल-नैर्ऋतिपुष्ययुतं पवनाश्विनिरेवतीशक्रयुतम्॥अनुराधधनिष्ठसु-चित्रकरं पिब भैषज्यमेव रुजापहरम् ॥४६॥इति भैषज्य-प्रकरणम्॥पुष्यो हस्तस्तथा ज्येष्ठाश्रवणश्चोत्तराश्विनी ॥ शु-भान्येतानि धिष्ण्यानि यातेवस्तौ विरेचयेत्४७॥इति विरेच

नम् ॥ जीवे शुक्रबुधे चंद्रे दिने विष्टिहते तिथौ॥ अशुभं कुरुते स्नानं रोगी रोगान्न मुच्यते ॥४८ ॥ अर्कार्कजांगार- दिने प्रशस्ते कोणस्थिते केंद्रगते च जीवे ॥ कामं स्थिरत्वं कुरुतेऽथ सिद्धिं स्नात्वा च रोगी विधिपूर्वकेण ॥ ४९ ॥ हस्तः पुष्यस्तथा ज्येष्ठा विष्णुर्मृगशिरस्तथा ॥ शुभान्येतानि ऋक्षाणि स्नाते कृच्छ्रगते तनौ॥५०॥व्यतिपातविष्टिदिवसे रवि- भूमिनंदनशनीनां स्नानात् ॥ व्रणमुक्तोऽथ शुभस्थितता- रके शशिनि ॥ ५१ ॥ इति विमुक्तस्नानम् ॥ मघोत्तरा पावकविष्णुचित्रास्वात्यश्विजीवादितिभास्कराश्च ॥ वाराः सिताकेंदुमहीसुतानां शस्ता धनुर्वेदविधौ प्रदिष्टाः ॥५२ ॥ अश्विनीमघचित्रायां स्वातौ स्यादुत्तरासु च ॥ पुनर्वसौ मघा मित्रे हस्ते च श्रवणेऽपि वा ॥ ५३ ॥ कृत्तिका- स्वपि चारंभो धनुर्वेदे प्रशस्यते ॥ गुरुशुक्रसुराचार्य्यवारे चांगारके रवौ ॥ ५४ ॥ तिथिनक्षत्रयोगेषु शुद्धेष्वपि निशाकरे ॥ कृपिव्यायामयुद्धेषु प्रशस्तो भूमिनंदनः ॥ ॥ ५५ ॥ नरास्तंजन्मनक्षत्रं अविशुद्धं यथा भवेत् ॥ तत्रारंभं न कुर्वीत तिथिव्याशोभने न च ॥ ५६ ॥ हरौ सुप्ते तथा पौषे चैत्रे वाथ सिते तिथौ ॥ शशिसौम्यार्कज- स्याह्नि दिग्वेधो नैव शस्यते॥५७॥इतिधनुर्वेदविधिः ॥पौ ष्णाश्विविश्ववसुभास्करवासुदेवचित्रासमीरणपुनर्वसुवारुणेषु ॥ वारेषु सूर्य्यशशिसोमजजीवशुक्रेष्वारोहणं निगदितं गज- वाजिनां च ॥ ५८ ॥ हस्तश्रवणत्रितयं पुनर्वसुरेवतीदित-

यम् ॥ रविशशिबुधशुक्रा वाजिगजारोहणे शस्ताः ॥ ५९॥ पौष्णत्रजेशादितिभद्वयानि हस्तादिपट्कश्रवणोत्तराणि ॥ दोलादिमातंगतुरंगमाणामारोहणेऽभीष्टफलप्रदानि ॥ ६० ॥ इतिदोलाद्यारोहणम् ॥ भौमशनैश्वरदिवसे दिवसपतौ गुरुगृहे हरौ सुप्ते ॥ पक्षे सिते निशायां करिणीरदकृतनं नेष्टम् ॥ ॥६१॥ इति हस्तिदंतच्छेदः ॥ आदित्यहस्ताश्विनिरोहिणीपु पुष्येऽथ पौष्णानिलदेवयोश्च॥ वारेपु तिथ्यादिपु वाजिकार्य्यं कुर्यान्नरस्तत्सुखसंददं स्यात् ॥ ६२ ॥ वाजिकार्यम् ॥ वसुपुनर्वसुपूर्वभुजंगमैः करनिशाकरशंकरदेवतैः ॥ सहरिवाक्पतिभिः सह चित्रया गुणगणार्जनमेभिरभीप्सितम् ॥ इति गुणगणार्जनम् ॥ सर्पेशमैत्रशशिपुष्यपुनर्वसू च वागीश शक्रशततारधनिष्ठहस्ताः ॥ पौष्णानलानिलविशाखमघाश्विमूलागोपु प्रशस्तमथवार्थविशेपयात्रा ॥ ६४ ॥ याम्यो हरिर्दहनमैत्रफणींद्रहस्ता धाताहिबुध्नमरुदर्य मविश्वचित्रा ॥ वारेऽर्कसूनुवसुधात्मजभास्कराणां कुर्यात्प्रवेशागमने मरणं पशूनाम् (?) ॥६५॥ त्रिपूत्तरेपु रोहिण्यां सिनीवाली चतुर्दशी ॥ श्रवणे चैव नक्षत्रे चित्रायामष्टमीपु च ॥ ६६ ॥ गोपु कार्य्यं न कुर्वीत प्रस्थानं वा प्रवेशनम् ॥ पशवस्तत्र नश्यंति अन्यत्र वनचारिणः ॥ ६७ ॥ इति गोचलन विधिः ॥ न गच्छेद्दक्षिणामाशां पट्केन श्रवणादिना ॥ भूतिकामो न कुर्वीत तृणकाष्ठादिसंग्रहम् ॥ ६८ ॥ छेदनं तृणकाष्ठानां संग्रहं च विशेपतः ॥ भूतिकामो न कुर्वीत

पट्केन श्रवणादिना ॥ ६९ ॥ धनिष्ठामादितः कृत्वा पंच ऋक्षाणि वर्ज्जयेत् ॥ गृहार्थं तृणकाष्ठानां संग्रहं नैव कारयेत् ॥ ७० ॥ अग्निदाहो भयं रोगो राजपीडा धनक्षयः ॥ संग्रहे तृणकाष्ठानां कृते वस्वादिपंचके ॥ ७१ ॥ पूर्वभाद्रेण यः कुर्य्यात्तृणकाष्ठादिसंग्रहम् ॥ आयुः प्रहीयते तस्य लक्ष्मीर्दूरेण नश्यति ॥ ७२ ॥ इति श्रवणादिचिंता ॥ नक्षत्रपट्टकिरणं पश्चात्संध्यागतैर्गृहैर्भिन्नम् ॥ क्रूराधिपीडितमन्या तद्दूषितंचाशुभं सर्वम् ॥७३॥ क्रूरग्रहेणापि समन्वितं च भोक्तव्यमुत्पातनिपीडितं च ॥ ऋक्षंतथोपग्रहपूजितं च विवर्ज्जयेदुद्वहनादिकार्य्ये ॥७४॥भुज्यमाने च भुक्तेच भोक्तव्ये पीडितेऽपि च ॥ क्रूरग्रहेण नक्षत्रे ऊढा कन्या न जीवति ॥ ॥ ७५ ॥ अग्रतो भूमिलं विंद्यात् आसनस्थं च दूयते ॥ पृष्ठतो मरिमतं विद्यात्रयः स्युर्वज्रपातकाः ॥ ७६ ॥ एकः सूर्य्यो द्वितीयोऽग्निस्तृतीयर्क्षं चतुर्भवम् ॥ विध्यत्यर्कयुतः पादः पादस्तस्यैंदुयोगतः ॥ ७७ ॥ यस्मिन्पादे ग्रहस्तिष्ठेच्छुभो वा यदि वाशुभः ॥ सपादं पीड्यते शेषाः पादास्तु शुभलक्षणाः ॥ ७८ ॥ बालाग्रपाताव् दुर्लक्षं भिनत्ति धातुष्कः ॥ समपादश्चैवंवेधाधिष्ण्यं परुपयंति (?) ॥ ७९ ॥ ॥ इति नक्षत्रपादचिंता ॥ चंद्रादष्टमगान्पापान् विवर्ज्जयेन्निधनं विलग्नं च॥चंद्रं च निधनसंस्थं सर्वारंभप्रयोगेऽपि ॥८०॥ निधने तुहिनमयूखो निधने पापग्रहोऽपिल्ग्नेऽपि॥ उपदशति नो नराणां शुभाभिलाषी शुभं कर्म ॥ ८१ ॥

निधनं निधनविलग्ने विननाशागे हिमगो ॥ पापग्रहेऽपिनिधने नैकविधं व्याधिवैपुल्यम् ॥ ८२ ॥ यस्य व्रतोपनयनादिशुभक्रियासु क्रूरोष्टमो भवति वाथ शशी विलग्नात् ॥ तस्याचिरेण परिकीर्तयंति संतः सुरेंद्रसचिवेऽपि च कंटकस्थे ॥ ८३ ॥ इति अष्टमलग्नचंद्रचिंता ॥ तिथ्यर्द्धमात्राकरणानि नित्यं कुर्वंति भोगं मुनयो वदंति ॥ गच्छंति वृद्धिं तिथयः प्रहानिं साम्येन वा संचरते तदेव ॥ ८४ ॥ कृतरासदिवादरभूतदिवाशुचराष्ट्रदिवेदपूर्णदिवा ॥ इति विष्टिगणं प्रवदंति बुधा यदि चंद्रगतिास्तिथयश्च समाः ॥ ८५ ॥ कृष्णे च त्रिदशा रात्रौ दिवा सप्त चतुर्दशी ॥ चतुर्थैकादशी रात्रावष्टमी पूर्णिमा दिवा ॥ ८६॥ विष्टिं भुजंगमाकारं केचिदिच्छंति दारुणम् ॥ भुजंगस्य मुखे भीतिर्न तु पुच्छे विधीयते ॥ ८७ ॥ सर्पमुखे संचरतां प्राणभयं प्राणिनां यथा भाति ॥ भवति यथा भयमधिकं विष्टिमुखे कुर्वतां कर्म ॥ ८८ ॥ विष्टेरास्यंभवतिघटिकापंचकण्ठस्तथैकाव क्षस्यैकादश निगदिता नाभिदेशे चतस्रः ॥ पुच्छे तिस्रः कटिरपि तथा बद्धपूर्वैर्मुनींद्रैराख्यातैपा न शुभफलदा वर्ज्जयेदुत्तमस्ताम् ॥ ८९ ॥ कार्य्यं न सिध्यति मुखे मरणं गले स्यादर्थक्षयो हृदि कटावपि बुद्धिनाशः ॥ नाभौ कलिर्विजयलब्धिरतीव पुच्छे भद्राप्रमाणफलमेतदुशंति संतः ॥ ९० ॥ भद्रस्य पुच्छं शुभहेतुरन्ये वदंति केचिन्न तु युक्तमेतत् ॥ शुष्कैंधनैर्दीप्तहुताशनस्य किमग्र-

भागेऽपि हि शीतता स्याद् ॥ ९१ ॥ असितजलदवर्ण-स्थूलनेत्रोग्रहंता विकृतहनुकपोला पिंडिकोद्बद्धजंघा ॥ अनलशतसहस्रं चोद्गिरंती समंतात्पतति भुवनमध्ये कार्य्य-नाशाय विष्टिः ॥ ९२ ॥ पूर्वस्यां दिशि शूलिनी समुदिता विप्रिश्चतुर्थ्यां तथा याष्टम्यां विकटा हुताशन-दिशि स्यादर्थनाशंकरी ॥ याम्यायामपि भानवी समु-दिता भूतं तथैकादशी नैर्ऋत्यां च करालघोरवदना भूतेश्वरी पूर्णिमा ॥ ९३ ॥ वारुण्यां वसुवारुणा प्रकथिता कृष्णा तृतीया मुनौसप्तम्यां खरखड्गपाणिविभवा वायव्यतो दृश्यते ॥ कौवेर्य्यां दशमीषु घोरवदना रेतोदया सर्वदा ईशान्यां यमदूतिका विरचति प्रातातिथिं भूतजाम् ॥ ९४ ॥ इति भद्राप्रकरणम् ॥ कृतमुनियमशरमंगलरा-मर्तुपुभास्करादियामार्द्धम्॥इतिभवति कालवेला न शुभाशुभ-कर्मकरणाय ॥ ९५ ॥ भवति प्रभावहीनो विहगगणो विहगयोगमुपयातः ॥ उदितरवेरिव यातरश्मिर्वखंडपरिमूलोऽपींद्रः ॥ ९६ ॥ प्रयाणेषु प्रयातॄणां यदा योगो भवेन्नृ-णाम् ॥ वीर्य्यनाशस्तथान्येषां भीरूणामिव संगरे ॥ ॥ ९७ ॥ योगे विहगे प्रभवे भवति न किंचित्करा ग्रहाः सर्वे ॥ करिणो हरेरिवाग्रे मदजलसंपृक्तभूपृष्ठाः ॥ ९८ ॥ सूर्य समासाद्य यथाखिलानां प्रकाशनाशो हि महौषधी-नाम् ॥ योगं समासाद्य तथा परेषां वीर्य्यप्रणाशो हि भवेद्ग्र-हाणाम् ॥९९॥ तनुसदने व्ययभे वा निधने वान्यत्र नेष्टभवने

मघसंयुता स्यात्तदा न कन्योद्वहनं वदंति ॥ १९ ॥ यात्रां चूडां विवाहं श्रुतिविवरविधिं शंखसत्रप्रवेशं प्रासादोद्यानहर्म्यं सुरवरभवनारंभविद्या निधानम् ॥ मौंजीबंधं प्रतिष्ठां मणिरदकनकाधारणं कुर्वते ये मृत्युस्तेषां च सिंहे गुरुदिनकरयोरेकराशिस्थयोश्च ॥ २० ॥ विवाहचूडाव्रतकर्णवेधक्षौरप्रतिष्ठार्थगृहप्रवेशाः ॥ सुवर्णशंखाद्युपभोगविद्या सिंहे सुरेज्ये न च शोभनाः स्युः ॥ २१ ॥ इति सिंहगुरुप्रकरणम् ॥ हृत्तापमर्थं हरणं सुतस्य वित्तस्य लाभो निधनत्वमायुः ॥ सूर्य्यादिसौर्य्यंतदिने नराणां तैलोपभोगे क्रमशः फलानि ॥ २२ ॥ प्रतिपद्यनपत्यस्य तृतीयायामपंथिकम् ॥ दशमी वित्तनाशाय सर्वं हंति त्रयोदशी ॥ २३ ॥ भोगार्थं क्रियते यत्तु स्नानं यादृच्छिकं नरैः॥ तन्निषिद्धं दशम्यादौ नित्यं नैमित्तिकाद्बहिः ॥ २४ ॥ एकर्क्षौ गुर्वर्कौ व्रतबंधोद्वहनदेवसन्मार्गाः ॥ न शुभदाश्च गदितावस्तमिते ऽनर्थदो दृष्टः ॥ २५ ॥ गुर्वर्कयोगसमये शौनकवाल्मीकिगौतमाद्यैश्च ॥ व्रतयज्ञोद्वाहाद्या न शुभफलाः कीर्त्तिता मुनिभिः ॥ २६ ॥ कर्णवेधं तथा क्षौरं विवाहं व्रतमेव च॥ गुर्वादित्ये न कुर्वीत आयुःपुत्रार्थनाशनम् ॥ २७ ॥ अस्तमिते भृगुतनये म्रियते कन्या बृहस्पतौ पुरुषः ॥ उभयोरपि मरणं स्यात्केतौ पाणिग्रहेऽभ्युदिते ॥ २८ ॥ अस्तं प्रयाते च गुरौ भृगौ वा सूर्ये निरंशे हिमगौ प्रनष्टे ॥ न कूपवाप्यादि कुमंदिरं च शुभं प्रदिष्टं धनकीर्त्तिनाशि ॥ २९ ॥ मृत्युर्वरस्या-

स्तमिते सुरेज्ये भृगौ युवत्या उभयोश्च चंद्रे॥भवेत्कुजे निष्प्रस-
वार्कसूनौ प्रवालिका यातकिनी च सौम्ये ॥ ३० ॥ उद-
ग्गते भास्वति चैत्रवर्ज्यं नास्तंगते देवगुरौ भृगौ च ॥ सं-
ध्यागते नो न शिशौ न वृद्धे कुर्वीत कन्याकरसंप्रयोगम् ॥
॥ ३१ ॥ अनादिदेवता दृष्टा शुचिः स्यान्नष्टभार्गवे ॥ म-
लिम्लुचेथ नावृत्तं तीर्थस्नानमपि त्यजेत् ॥ ३२ ॥ इति
शुक्रास्तचिंता ॥ बालो दशाहान्युदितः परेण पूर्वेण बा-
लो दिवसत्रयंच वृद्धस्तु पूर्वेण सपक्षमेकः पश्चाद्गतः पंचदि-
नानि शुक्रः ॥ ३३ ॥ भवेत्संध्यागतः पश्चादस्तमेति
दिनत्रयम् ॥ दिनानि पंच पूर्वेण तत्कृतं कर्म वर्जयेत् ॥
॥ ३४ ॥ चतुरो वासरानेति बालत्वं भृगुनंदनः ॥ वृद्ध-
त्वमपि पंचैव संध्यायां तु दिनत्रयम् ॥ ३५ ॥ बाले
वृद्धे च संध्यागे चतुष्पंचत्रिवासराः ॥ जीवे च भार्गवे चैव
विवाहादिषु वर्जयेत् ॥ ३६ ॥ बाले च दुर्भगा नारी
संध्यायां तु तपस्विनी ॥ निधनास्तगते शुक्रे क्षीणे चैव
दरिद्रता ॥३७॥ बाले भृगौ परिणीता युवतिरसाध्वी भवे-
दवश्यमिदम्॥वृद्धे तस्मिन्वंध्यास्तमिते मृत्युमभ्येति ॥३८॥
बालो दिनचतुष्कं स्याद्वृद्धः पंचाहमिष्यते ॥ अहःसंध्या-
गतः शुक्रस्त्रिधा ह्येवं विवर्जयेत् ॥ ३९ ॥ इति बाल-
वृद्धसंध्यागतगुरुशुक्रचिंता ॥ गते वर्षद्वये पंच सार्द्धे प-
क्षे दिनद्वये॥ दिवसस्याष्टमे भागे पतत्येकोधिमासकः॥४०॥
अधिमासोऽधिको यत्र द्विराषाढो भवेत्तदा ॥ अनावास्या

द्वयं दृष्ट्वा द्विराषाढं प्रकीर्तयेत् ॥ ४१ ॥ यां तिथिं समनुप्राप्य तुलां गच्छति भास्करः ॥ तथैव सर्वसंक्रांतीर्यावन्मेषं न गच्छति ॥ ४२ ॥ यदा शशी न याति गभस्तिमंडलं दिवाकरः संक्रमणं करोत्यनु ॥ तदाऽधिमासः कथितो विरिंचिना विवाहयात्रोत्सवयज्ञदूषकः ॥ ४३ ॥ माघमासेषु मासेषु षट्सु दर्शद्वयं यदा ॥ द्विराषाढस्तदा ज्ञेयः कर्कटे च हरिः स्वपेत् ॥ ४४ ॥ द्व्यमावास्ये स्पृशति दिनकृद्यावदिंदो सुगेहे मास्येकस्मिन्पतति गणितान्यत्र मासोऽधिपूर्वः ॥ तत्राषाढद्वयमधिगतं तंत्रसिद्धांतविद्भिस्तत्पर्यंतं भवति शशिनः पौर्णमासीद्वयेन ॥ ४५ ॥ अमावास्याद्वयं यत्र रविसंक्रांतिवर्जितम् ॥ मलिम्लुचः स विज्ञेयः सर्वकर्मबहिष्कृतः ॥४६ ॥ अमावास्यामतिक्रम्य यदा गच्छति भास्करः॥ मलिम्लुचः स विज्ञेयः सर्वकर्मविवर्जितः ॥ ४७ ॥ एकर्क्षस्थो यदा भानुरमावास्याद्वयं स्पृशेत् ॥ द्विराषाढः स विज्ञेयः कृष्णः स्वपिति कर्कटे ॥ ४८ ॥ वृषंत्यक्त्वा च तुर्य्यांते षडशीतिसिते यदा॥ तदा दैवविदा चिंत्यं द्विराषाढप्रकल्पनम् ॥ ४९ ॥ सिनीवालीमतिक्रम्य यदा संक्रमते रविः॥शुक्रशेषस्तदा मासः कालस्तत्रामयःस्मृतः॥५०॥ सिंहकन्यागते भानौ भवेद्दर्शद्वयं यदा ॥ अगामिनि तदा काले द्विराषाढस्य संभवः ॥ ५१॥ सिंहकन्याकुलीरेषु यदा दर्शद्वयं भवेत्॥आगामिनि भवेद्वर्षे कुलीरे माधवः स्वपेत्५२ दक्षिणाशां गते सूर्य्ये भवेद्दर्शद्वयं यदा ॥ आगमिष्ये-

तदा काले शेते च श्रावणे हरिः ॥ ५३ ॥ श्रावणादौ त्रिके मासे अमावास्याद्वयं यदा ॥ द्विरापाढस्तदा ज्ञेयः पतिते वार्द्धमासके ॥ ५४ ॥ यत्राधिमासपतने गणितक्रमेण मासो मलिम्लुच इति प्रथितः पुराणे ॥ तस्माद्विवाहगमनव्रतबंधदीक्षाक्षौरादिकर्मसु(?)स्यागविनाशहेतुः ॥ ५५ ॥ षष्टिभिर्दिवसैर्मासः कथितो बादरायणैः ॥ पूर्वमानं परित्यज्य मानमुत्तरमिष्यते ॥ ५६ ॥ अधिमासो न कर्त्तव्यः श्राद्धे संवत्सरादिके ॥ वर्पवृद्ध्या निमेषादि कर्त्तव्यमधिकेन तु ॥ ॥ ५७ ॥ प्रतिसंवत्सरे श्राद्धे नाधिमासं विवर्ज्जयेत् ॥ नित्यानित्यानि चान्यानि तीर्थस्नानं तथैव च ॥ ५८ ॥ परमेष्ठिनवश्राद्धं वर्षायाः श्रवणं तथा ॥ मलिम्लुचेऽपि कर्त्तव्यं सर्वमन्यद्विवर्ज्जयेत् ॥ ५९ ॥ नित्यनैमित्तिके कुर्य्यात्प्रयतः सन्मलिम्लुचे ॥ तीर्थस्नानं गजच्छाया प्रेतश्राद्धं तथैव च ॥ ६० ॥ वर्षे वर्षे च यच्छ्राद्धं मातापित्रोः क्षयेऽहनि ॥ मलमासेऽपि कर्त्तव्यं व्याघ्रस्य वचनं यथा ॥ ६१ ॥ दशहरासु नोत्कर्पश्चतुर्ष्वपि युगादिषु ॥ उपाकर्मणि कर्त्तव्यं मघा चैव विशेपतः ॥ ६२ ॥ पौर्णमासो भवत्यन्यः कामं नक्षत्रयोगतः ॥ माघ एव तु माघ्यां स्यान्मकरस्थे दिवाकरे ॥ ६३ ॥ उत्कर्षकालवृद्धो स्यादुपाकर्मादि कर्मणाम् ॥ अभिषेकादिवृद्धीनां तत्तूत्कर्षो युगादिषु ॥ ६४ ॥ युगादिकल्पागतभार्गवर्षपुण्याभिषेकाष्टविवर्द्धनानि ॥ मासस्य सम्यासिवेतरापि न विक्रियां यात्यधि-

मासपाते ॥ ६५ ॥ द्विराषाढे तु संप्राप्ते विष्णुः स्वपिति कर्कटे॥शक्रोत्थानं तु कन्यायां तुलायां पार्वती तथा॥६६॥ वृश्चिके चैव गोविंदः कुंभे चैव हुताशनः ॥ चैत्रेतु फाल्गुनीं विंद्याद्वैशाखेऽनंगपूजनम् ॥ ६७ ॥ कर्किणार्के हरौ सुप्ते शक्रकेतुक्रियाश्विने ॥ तुलायां बोधयेद्देवीं वृश्चिके तु जनार्दनम् ॥६८ ॥ शक्रस्य तु ध्वजो ( ? ) नंतो विष्णोश्च परिवर्तनम् ॥ मासद्वयेन निर्दिष्टं शयनादेवं कोविदैः ॥ ॥ ६९ ॥ वचनात्प्राप्तकाले तु शक्रं नोत्थापयेद्यदि ॥ राष्ट्रं प्रणश्यति क्षिप्रं प्रजा चैव प्रपीड्यते ॥ ७० ॥ द्विराषाढे तु संप्राप्ते यदि सिंहे हरिद्वयम् ॥ परश्चोत्थाच्छक्रं (?) कन्यायां सुविवर्जयेत् ॥ ७१ ॥ सिंहकन्ये च पक्षौ चेच्छक्रे हर्य्यादिसंयुतौ ॥ सिंहे परे शाक्रमहः कन्यायामिंद्रदुर्गयोः ॥ ॥ ७२ ॥ द्विराषाढे क्रियायावत्तावद्विष्णोः प्रबोधनम् ॥ प्रबुद्धे तु हरौ नार्य्या गते सूर्य्ये च सत्क्रियाः ॥ ७३ ॥ इति मलिम्लुचाद्विराषाढचिंता ॥ षष्ठ्यामुपोष्ययः सम्यक् सप्तम्यामर्कमर्चयेत् ॥ स हव्याशी भुक्तिमुक्ती प्राप्नोति चेप्सितं फलम् ॥ ७४ ॥ षष्ठ्यां यो नियतो भूत्वा सप्तम्यां विधिवद्रविम् ॥ संपूज्योपवसेत्सोऽपि मुमुक्षुश्चेप्सितं फलम् ॥ ७५ ॥ एकादश्यामुपोष्याथ पक्षयोरुभयोरपि ॥ द्वादश्यामर्चयेद्विष्णुं स मुक्तिफलभाग्भवेत् ॥ ॥ ७६ ॥ त्रयोदश्यां नवम्यां यो देवीमिष्टां प्रपूजयेत् ॥ नियतात्माप्युपवसेल्लभते चेप्सितं फलम् ॥ ७७ ॥ एका-

दश्यष्टमी षष्ठी शुक्ला चैव चतुर्दशी ॥ पूज्या परेण संयुक्ता शेषा पूर्वेण संयुता ॥ ७८ ॥ एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी ॥ चतुर्थी च ह्यमावास्या पूज्या एताः परान्विताः ॥ ७९ ॥ युग्माग्निऋतुभूतानि परान्या वसुरंध्रयोः ॥ इंद्रेण द्वादशी युक्ता चतुर्दश्या तु पूर्णिमा ॥ ॥ ८० ॥ प्रतिपद्यप्यमावास्यातिथ्योर्युग्मं महाफलम् ॥ एतद्व्यस्तं महादोषं हंति पुण्यं पुराकृतम् ॥ ८१ ॥ नागविद्धा तु या षष्ठी भानुविद्धो महेश्वरः ॥ चतुर्दशी कामविद्धा तिस्रस्ता मलिनाः स्मृताः ॥ ८२ ॥ नागविद्धा तु या षष्ठी रुद्रविद्धो दिवाकरः ॥ कामविद्धो भवेद्विष्णुरपूज्यास्ते तु वासराः ॥ ८३ ॥ षष्ठ्येकादश्यमावास्या पूर्वविद्धा तथाष्टमी ॥ सप्तमी परविद्धा च नोपोष्यं तिथिपंचकम् ॥ ८४ ॥ नागविद्धा तु या षष्ठी सप्तमी च तथाष्टमी ॥ दशमी च समं मिश्रा त्रयोदश्या चतुर्दशी ॥८५॥ भूतविद्धाऽप्यमावास्या न पूज्या मुनिपुंगवैः ॥ उत्तरोत्तरविद्धास्ताः कर्त्तव्याः कावकी श्रुतिः ॥८६॥ नागो द्वादशनाडीभिर्दूषयन्युत्तरां तिथिम् ॥ घटिकार्द्धं त्रिभागं वा स्वल्पं दूपयते तिथिम् ॥ ८७ ॥ पंचगव्यघटं पूर्णं सुरा या विंदुतो यथा ॥खर्वोदर्पस्तथा हिंसा त्रिविधं तिथिलक्षणम् ॥ ८८ ॥ खर्वदर्पौ परौ काम्यौ हिंसं पूर्वत्र पूजयेत् ॥ खर्वा दिनद्वया तुल्या दर्पा स्याद्वृद्धिगामिनी ॥८९॥ हिंसा सा च तिथिर्ज्ञेया या भवेत्क्षयगामिनी ॥ षण्मुहूर्त्तापि

कर्त्तव्या या तिथिः क्षयगामिनी ॥ ९० ॥ त्रिमुहूर्त्तापि कर्त्तव्या या तिथिर्वृद्धिगामिनी ॥ यां तिथिं समनुप्राप्य उदयं याति भास्करः ॥ ९१ ॥ सा तिथिः सकला ज्ञेया दानाध्ययनकर्मसु ॥ शुक्लपक्षे तिथिर्ज्ञेया यस्यामभ्युदितो रविः ॥ ९२ ॥ कृष्णपक्षे तु सा ज्ञेया यस्यामस्तमितो रविः ॥ वर्द्धमानस्य पक्षस्य उदयात्पूज्यते तिथिः ॥ ९३ ॥ यदा पक्षःक्षयं याति तदा स्यादपराह्णिकी ॥ शुक्लपक्षे तु सा ज्ञेया यस्यामस्तमितो रविः ॥ ९४ ॥ व्रतोपवासस्नानादौ घटिकापि यदा भवेत् ॥ उदये सा तिथिर्ज्ञेया श्राद्धादावस्तगामिनी ॥ ९५ ॥ दैवं कर्म तया कार्यं यस्यामभ्युयते रविः ॥ सा तिथिः सकला ज्ञेया विपरीता तु पैतृकी ॥ ॥ ९६ ॥ दृष्टचंद्रा सिनीवाली नष्टचंद्रकला कुहूः ॥ सिनीवाली सदा पित्र्ये दैवे तु कथिता कुहूः ॥ ९७ ॥ प्रतिपदा स्वमावास्यातिथ्योर्युग्मं महाफलम् ॥ एतद्व्यस्तं महादोषं हंन्ति पुण्यं पुराकृतम् ॥ ९८ ॥ भूतविद्धाप्यमावास्या प्रतिपन्मिश्रिता तथा ॥ पैत्र्ये कर्मण्यि विद्धापि ग्राह्या कुतपपालिनी ॥ ९९ ॥ घटिकैकाप्यमावास्या प्रतिपत्सु भवेत्तदा॥भूतविद्धापि सा कार्य्या दैवे पित्र्ये च कर्मणि॥१००॥ मुहूर्त्तमप्यमावास्या प्रतिपत्सु यदा भवेत् ॥ तदा तमुत्तमं दैवं शेषं सर्वं हि पूर्ववत् ॥ १ ॥ तुलामकरमेषेषु कन्या च मिथुने रविः ॥ भूतविद्धाप्यमावास्या पूज्या भवति यत्नतः ॥ २ ॥ अमा वै सोमवारेण रविवारेण सप्तमी ॥

चतुर्थी भौमवारेण विषुवत्सदृशं फलम् ॥ ३ ॥ अमावास्या भवेद्वारे यदा भूमिसुतस्य वै ॥ जाह्नवीस्नानमात्रेण गोसहस्रफलं भवेत् ॥ ४ ॥ इतितिथिनिर्णयः ॥ शुक्ले वा यदि वा कृष्णे विष्णुपूजनतत्परः ॥ एकादश्यां न भुंजीत यदीच्छेत्स्वर्गसंस्थितिम् ॥ ५ ॥ एकाप्येकादशी शुक्ला वर्षवासरसंयुता ॥ उपोष्या सा महापुण्या अश्वमेधफलप्रदा ॥ ६ ॥ द्वादश्येकादशी यत्र तत्र सन्निहितो हरिः ॥ कार्यस्तत्रोपवासस्तु संयतेन्द्रियधारिणा ॥ ७ ॥ कलाप्येकादशी यत्र परतो द्वादशी भवेत् ॥ तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम् ॥ ८ ॥ एकादश्यां द्वादशी स्याच्छेषा चैव त्रयोदशी॥दिनक्षयेऽपि सा पूज्या यतीनामुत्तमा तिथिः ॥ ९ ॥ उपोष्य पारणप्राप्तो न विंदेद्द्वादशीं यदि ॥ दशम्यापि हि विद्धा स्यादेकादश्येव पुण्यदा॥ १० ॥ दशम्येकादशीविद्धा गांधार्या समुपोषिता ॥ तस्याः पुत्रशतं नष्टं ततस्तां परिवर्जयेत् ॥ ११ ॥ विद्धाप्येकादशी कार्या परतो द्वादशी भवेत् ॥ तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम् ॥ १२ ॥ द्वादशद्वादशीर्हंति त्रयोदश्यां तु पारणे॥दशम्यनुगता हंति द्वादशद्वादशीफलम् ॥ १३॥धर्मापत्यधनायूंषि त्रयोदश्यां तु पारणे ॥ एकादशीकलामात्रं द्वादशी तु क्षयं गता ॥ १४ ॥ क्षीणा सा द्वादशी ज्ञेया

तत्र नक्तं विधीयते ॥ एकादश्यां यथा वृद्धिः पक्षयोरुभयोरपि ॥ १५ ॥ तत्रोत्तरां यतिः कुर्य्यात्पूर्वामुपवसेद्गृही ॥ दशम्यामेकभक्तं तु मैथुनादि विवर्ज्जयेत् ॥ १६ ॥ एकादश्यां न भुंजीत यदीच्छेत्स्वर्गसंस्थितिम् ॥ संक्रांतौ रविवारेण ग्रहणे चंद्रसूर्य्ययोः ॥ १७ ॥ पारणं चोपवासं च न कुर्यात्पुत्रवान्गृही ॥ संक्रांतौ कृष्णपक्षे तु रविशुक्रदिने तथा ॥ १८ ॥ एकादश्यां न कुर्वीत उपवासं च पारणम् ॥ रविशुक्रदिने चैव संक्रांत्यां च दिनक्षये ॥ १९ ॥ पारणं चोपवासं च न कुर्य्यात्पुत्रवान्गृही ॥ एकादश्यां यदा राम आदित्यस्य दिनं भवेत् ॥ २० ॥ उपोष्या सा महापुण्या पुत्रपौत्रविवर्द्धिनी ॥ शंखेनैव पिबेत्तोयं भक्षयेत्कूर्मशूकरौ ॥ २१ ॥ एकादश्यां न भुंजीत पक्षयोरुभयोरपि ॥ अह्नो वाद्यंतयोर्भुक्तमेकैकं मध्यमे द्वयम् ॥ २२ ॥ चतुर्भुक्तनिषेधोयमुपवासविधिःस्मृतः ॥ असत्यभाषणं द्यूतं दिवास्वप्नं च मैथुनम् ॥ २३ ॥ एकादश्यां न कुर्वीत उपवासपरो नरः ॥ असकृत्तोयपानाच सकृत्तांबूलभक्षणात् ॥ २४ ॥ उपवासो विनश्येत दिवास्वप्नाच मैथुनैः ॥ कांस्यं मांसं मसूरं च चणकं कोद्रवं तथा ॥ २५ ॥ शाकं मधुपरान्नं च त्यजेदुपवसन्स्त्र्यहम् ॥ कांस्यं मांसं सुरां क्षौद्रं लोभं वितथभाषणम् ॥ २६ ॥ व्यायामं च व्यवायं च दिवास्वप्नमथांजनम् ॥ शिलापिष्टं मसूरं च द्वादशैतानि वैष्णवः ॥ ॥ २७ ॥ द्वादश्यां वर्जयेन्नित्यं सर्वपापैः प्रमुच्यते ॥ २८ ॥ इति एकादशीव्रतम् ॥ दिनाभिव्यापिनी कृष्णा शुक्लाचैव

तु सप्तमी ॥ उपोष्या सा महापुण्या अश्वमेधफलप्रदा ॥ २९ ॥ दिनाभिव्यापिनी षष्ठी सप्तम्यामष्टमी भवेत् ॥ षष्ठ्यामेव तदाकुर्य्यादादित्यव्रतमुत्तमम् ॥ ३० ॥ षष्ठी वा त्रिकला यत्र सप्तम्यामष्टमी भवेत् ॥ षष्ठ्यां सारव्रतं कुर्य्यादष्टम्यामेव पारणम् ॥ ३१ ॥ इति सप्तम्यर्कव्रतम् ॥ वह्निःस्कंदपुरंदरौगणपतिर्लक्ष्मीर्यमो भास्करो वायुः पार्वतिका तथा वसुमती तोयाधिपः केशवः ॥ ब्रह्माशंभुरिवादयः प्रतिपदारंभे तिथौ शेरते उत्तिष्ठंत्यमुना क्रमेण वरदाः स्वे स्वे दिने पूजिताः ॥ ३२ ॥ सर्वे देवाश्च तिथ्यादौ निद्यंते च महेश्वरः ॥ शुक्रविष्णू तथात्रादौ आयंते च विबुध्यते ॥ ३३ ॥ आभाकासितपक्षे तु मैत्रश्रवणरेवती ॥ आदिमध्यावसानेषु शयनावर्त्तबोधनम् ॥ ३४ ॥ मैत्रायपादे स्वपितीह विष्णुर्वैष्णव्यमध्ये परिवर्तते च ॥ पौष्णावसाने भुजगारिकेतुरुत्तिष्ठते मासचतुष्टयेन ॥ ३५ ॥ विष्णुर्दिवा न स्वपति न रात्रौ प्रतिबुद्ध्यति ॥ द्वादशी ऋक्षसंयोगात्पादयोगे न कारणम् ॥ ३६ ॥ उत्पत्तिशयने चैव तद्वत्पार्श्वविवर्त्तिते ॥ द्वादशी ऋक्षसंयोगात्पादयोगो न कारणम् ॥ ३७ ॥ निशि स्वप्नो दिवोत्थानं संध्यायां परिवर्तनम् ॥ पादयोगादन्यतिथौ द्वादशऋक्षसंज्ञकम् ॥ ३८ ॥ मैत्रांतस्य दिवाभागे द्वादश्यां न समायुतः ॥ तत्रापि शयनं विष्णोर्मैत्रे रात्रिसमायुते ॥ ३९ ॥ रेवत्यंतपदे रात्रौ प्राप्ते नारायणोत्सवे ॥ पादयोगमनादृत्य

अर्घदानक्रिया मुनेः ॥ अगस्त्यस्य सुरैः पूर्वं यथोद्दिष्टं तथा शृणु ॥ ६२ ॥ पुरायुगसहस्रं तु विष्णुर्वारुणिना मुने ॥ आराधितः प्रसादार्थं तस्मै प्रादाद्वरं हरिः ॥ ६३ ॥ दक्षिणाशां पुरस्कृत्य त्वं प्रतिष्ठस्ववारुणे ॥ हितार्थं सर्वलोकानां विधिं व्याख्यामि यत्नतः ॥ ६४ ॥ यत्त्वां तत्र स्थितं भक्त्या नार्चयिष्यंति मानवाः ॥ संवत्सरकृतं पुण्यमभियोगाद्भवेत्तु च ॥ ६५ ॥ वारुणे ते भविष्यंति लोकेस्मिन्नर्घदास्तव ॥ एवं दत्तस्त्वगस्त्यस्य वरो देवेन चक्रिणा ॥ ६६ ॥ तस्य चार्घविधानं च कथ्यमानं शृणुष्व मे ॥ अप्राते भास्करे कन्यां त्रिभिर्भागैस्त्रिभिर्दिनैः ॥ ॥ ६७ ॥ अर्घंदद्युरगस्त्यायये वसंति महोदये ॥ काशपुष्पमयीं रम्यां कृत्वा मूर्तिं तु वारुणे ॥ ६८ ॥ प्रदोषे विन्यसेत्तां तु पूर्णकुंभेप्यलंकृते ॥ कुंभस्थं पूजयेच्चं तु पुष्पधूपविलेपनैः ॥ ६९ ॥ दध्यक्षतैर्वालिं दद्याद्रात्रौ कुर्य्यात्प्रजागरम् ॥ प्रभाते तां समादाय यायात्पुण्यं जलाश्रयम् ॥ ॥ ७० ॥ निशांते तां तु विन्यस्य जलांशे प्रतिमां मुनेः ॥ अर्घं दद्यादगस्त्याय भक्त्या सम्यगुपोषितः ॥ ७१ ॥ पुष्पैर्मूलैः फलैर्भक्ष्यैः शारदैश्च सुगंधिभिः ॥ द्राक्षाखर्जूरककंधुनालिकेरादिभिः शुभैः ॥ ७२ ॥ पंचरत्नसमायुक्तं हेमरूप्यसमन्वितम् ॥ सप्तधान्यसमायुक्तं दधिचंदनमिश्रितम् ॥ ॥ ७३ ॥ अर्घपात्रं समादाय अर्घं दद्युर्द्विजातयः ॥ अगस्त्यखनमानः खनित्रैः प्रजामपत्यं बलमिच्छमानः ॥ उभौ

वर्णावृष्टिरुग्र उपोषयत्यादेवेष्यासिरावो जगाम (?) ॥७४॥ यथालाभं कृतार्थास्ते सर्ववर्णाःसुभक्तितः ॥अर्घं दद्युरगस्त्याय शूद्रमनुविधिस्त्वयम् ॥ ७५ ॥ काशपुष्पप्रतीकाश अग्निमारुतसंभव ॥ मित्रावरुणयोः पुत्र कुंभयोने नमोस्तु ते ॥ ७६॥ अर्घं दत्वा विधानेन नरः कुंभोद्भवाय च ॥ त्यजेदगस्त्यमुद्दिश्य धान्यमेकं फलं रसम् ॥ ७७ ॥ ततोऽन्नं भोजयेद्विप्रान्घृतपायसमोदकैः ॥ गाः सुवर्णं च वासांसि तेभ्यो दद्याच्च दक्षिणाम् ॥ ७८ ॥ घृतपायसयुक्तेन पात्रेण स्थगिताननम् ॥ सहिरण्यं च तं कुंभं ब्राह्मणाय निवेदयेत् ॥ ॥ ७९ ॥ द्विजो यथालाभमुपाहृतार्थं प्राप्नोति वेदांश्च सपुत्रपौत्रान् ॥ वैश्यश्च गां भूरि धनं च शूद्रो रोगक्षयं धर्मफलं च सर्वे ॥ ८० ॥ सत्पुत्रं लभते नारी दत्वार्घं विधिना मुनेः ॥ कन्या सत्पतिमाप्नोति धर्मारोग्यं च पूजनात् ॥ ८१ ॥ दत्वार्घं मुनिमुख्याय तोषयित्वा जनार्दनम् ॥ विष्णुलोकमवाप्नोति नरो नास्त्यत्र संशयः ॥ ८२॥ इत्यगस्त्यार्घः ॥ श्रवणेन समायुक्ता मासि भाद्रपदे सिता ॥ द्वादशी सा महापुण्या नाम्ना तु विजया स्मृता ॥ ८३ ॥ तस्यां स्नातो विधानेन सर्वतीर्थफलं भवेत् ॥ अर्चयित्वाच्युतं भक्त्या लभेत्पुण्यं दशाब्दिकम् ॥ ८४ ॥ इति श्रवणद्वादशी ॥ अष्टमी कृष्णपक्षस्य रोहिणीऋक्षसंयुता ॥ भवेत्प्रौष्ठपदे मासि जयंतीनाम सा स्मृता ॥ ८५ ॥ जयंत्यामुपवासं तु कृत्वा भक्त्यार्चयेद्धरिम् ॥ तस्य जन्मशतोद्भूतं पापं नाशयतेऽच्यु-

तः ॥ ८६ ॥ कौमारे यौवने बाल्ये वार्द्धके यदुपार्ज्जितम् ॥ तत्पापं शमयेत्कृष्णस्तिथावस्यां सुपूजितः ॥ ८७ ॥ महापुण्यतमः कालो जयंत्याख्यो हि स स्मृतः ॥ तत्र जातो जगन्नाथः कौस्तुभी हरिरीश्वरः ॥ ८८ ॥ तमेवोपवसेत्कालं रात्रौ कुर्य्याच्च जागरम् ॥ एकाग्रेणैव भावेन विष्णोर्नामानुकीर्त्तनम् ॥ ८९ ॥ अनघं वामनं शौरिं वैकुंठं पुरुषोत्तमम् ॥ वासुदेवं हृषीकेशं माधवं मधुसूदनम् ॥ ९० ॥ वाराहं पुंडरीकाक्षं नृसिंहं दैत्यसूदनम् ॥ दामोदरं पद्मनाभं केशवं गरुडध्वजम् ॥ ९१ ॥ गोविंदमच्युतं कृष्णमनंतमपराजितम् ॥ अधोक्षजं जगद्बीजं सृष्टिसंहारकारणम् ॥ ९२ ॥ अनादिनिधनं विष्णुं त्रिलोकेशं त्रिविक्रमम् ॥ नारायणं चतुर्बाहुं शंखचक्रगदाधरम् ॥ ॥ ९३ ॥ पीतांबरधरं नित्यं वनमालाविभूषितम् ॥ श्रीवत्सांकं जगत्सेतुं श्रीधरं श्रीपतिं हरिम् ॥९४॥ प्रणमामि सदा देवं वासुदेवं जगत्पतिम् ॥ नामान्येतानि संचित्य गत्यर्थं प्रार्थयेत्ततः ॥ ९५ ॥ त्राहि मां सर्वलोकेश हरे संसारसागरात् ॥ त्राहि मां सर्वपापेभ्यो दुःखशोकार्णवात्प्रभो ॥९६॥ सर्वयज्ञेश्वर त्राहि पतितं मां भवार्णवे ॥ देवकीनंदन श्रीश हरे संसारसागरात्॥९७॥त्राहि मां सर्वदुःखघ्न रोगशोकार्णवाद्धरे ॥ त्राहि मां देवदेवेश त्वत्तो नान्योस्ति रक्षिता॥९८ ॥ योगाय योगेश्वराय योगज्ञाय योगसंभवाय गोविंदाय नमोनमः ॥ ९९ ॥ इतिस्नानमंत्रः ॥ ॐयज्ञाय यज्ञेश्वराय यज्ञपतये

यज्ञसंभवाय नमोनमः॥१००॥ इत्यर्घमंत्रः॥ ॐसोमायेति चंद्रार्चनमंत्रः ॥ धर्मायेति होममंत्रो घृततिलाभ्याम् ॥ विश्वाय विश्वेश्वराय विश्वपतये विश्वसंभवाय गोविंदाय नमो नमः ॥१॥इति शयनमंत्रः॥ सर्वाय सर्वेश्वराय सर्वपतये सर्वसंभवाय गोविंदाय नमो नमः॥२॥ इति स्मरणमंत्रः॥ (?)॥ सर्वभूतायेति समाप्तिमंत्रः ॥ अर्द्धरात्रे तु योगोऽयं तारापत्युदये सदा॥नियतात्मा शुचिः शांतः पूजां तत्र समाचरेत् ॥३॥फलपुष्पोपहारैश्च धूपदीपानुलेपनैः ॥ स्थंडिले पूजयेद्देवं सचंद्रं रोहिणीं तथा ॥ ४ ॥ शंखे तोयं समादाय सपुष्पफलचंदनैः ॥ जानुभ्यामवनिं गत्वा चंद्रायार्घं निवेदयेत् ॥ ॥ ५ ॥ ततः स्तोत्रैश्च मंत्रैश्च स्तुत्वा देवं जनार्द्दनम् ॥ गीतवादित्रनृत्यैश्च रात्रिशेषं यथासुखम् ॥ ६ ॥ क्षीरोदार्णवसंभूत अत्रिनेत्रसमुद्भव ॥ गृहाणार्घं शशांकेमं रोहिण्या सहितो मम ॥ ७ ॥ इति चंद्रार्घमंत्रः ॥ बलभद्रश्च कृष्णश्च वसुदेवोऽथ रोहिणी॥ देवकी च यशोदा च पूजनीया द्विजातिभिः ॥ ८ ॥ अष्टम्यामथ रोहिण्यां न कुर्य्यात्पारणं क्वचित्॥हन्यात्पुराकृतं कृत्स्नमुपवासार्जितं फलम्॥ ॥ ९ ॥ तिथिस्त्रयोदशं हंति नक्षत्रं द्वादशैव तु॥तस्मात्प्रयत्नतः कुर्य्यात्तिथिभांते च पारणम् ॥ १० ॥ इति रोहिण्यष्टमीविधिः ॥ सिंहे रवौ सिते पक्षे हस्तादित्रिभसंयुता ॥रुद्राणी प्रीतिदा ज्ञेया चतुर्थी हरितालिका(?)॥ ११ ॥ हस्तचित्रानिलर्क्षेषु हरौ सूर्य्ये चतुर्थिका ॥ हरितालीतिथिः

पुण्या पार्वतीप्रीतिदा सदा ॥ १२ ॥ त्वाष्ट्रभे स्वातिभे वापि चतुर्थी हरितालिका ॥ भाद्रे मासि सिते पक्षे तिथिः सैवोत्तमा स्मृता ॥१३॥ भाद्रे मासि सिते पक्षे चतुर्थी स्वातियोगिनी ॥ जनस्य त्वभिशापाय मृगांकस्य च दर्शने ॥ ॥ १४ ॥ तृतीया तु न कर्त्तव्या द्वितीयोपहिता भवेत् ॥ या द्वितीयायुता तां तु यः करोति नराधमः॥ संवत्सरकृतेनेह स तु धर्मेण लुप्यते ॥ १५ ॥ शुक्ले काष्ठापि या चैव द्वितीया संप्रदृश्यते ॥ सा तृतीया न कर्त्तव्या कर्त्तव्या गुणसंयुता ॥ १६॥ द्वितीयासंयुतां तां तु पूर्वधर्मो विलुप्यते ॥ विधवात्वं दुर्भगात्वं सा लभेन्नात्र संशयः ॥ १७ ॥ अथ कालमाधवीयमते ॥ द्वितीयाशेपसंयुक्तां तृतीयांकुरुते तु यः ॥ स याति नरकं घोरं कालसूत्रं भयंकरम् ॥ १८॥ अथस्कंदपुराणे ॥ तृतीया तु न कर्त्तव्या द्वितीयासंयुता तिथिः ॥ या करोति विमूढा स्त्री पुरुपो वा शिवध्वजः (?) ॥ १९॥ द्वितीयाशेपसंयुक्ता या करोति च विह्वला ॥ सा वधव्यमवाप्नोति प्रवदंति मनीपिणः ॥ २०॥ इति हरिताडीचतुर्थी ॥ भाद्रपदासिताष्टम्यामिंद्रध्वजमिष्टदारुमयम् ॥ संपूज्य जागराद्यैः श्रवणे वोत्थापयेद्विधिवत् ॥ २१ ॥ भाद्रेमासि सिते पक्षे दशमी मूलसंयुता॥समाप्पादके शंखं(?) याम्यंते निशि पातयेत् ॥ २२ ॥ सिंहं गते दिनकरे सितचारुपक्षे हर्या त्रपादसुप्रसन्निहिते (?)शशांके ॥उत्तिष्ठते त्रिदिवमं दिरवृंदवंद्यो याम्ये ततो निशि निपीदति वज्रपाणिः ॥२३॥

श्रवणाद्ये भरण्यंते सिंहे चैव दिवाकरे ॥ ध्वजोत्थानं सुरेशस्य क्रमाद्विसर्ज्जनं निशि ॥ २४ ॥ द्वादशी हरिसंयुक्ता मासि भाद्रपदे सिता ॥ तस्यामुत्थापितं शक्रं भरण्यां निशि पातयेत् ॥ २५ ॥ तारापतौ त्रिदशदानयमं त्रिभागे सौम्यग्रहैर्नवमपंचमकंटकस्थैः ॥ लग्नेषु दैत्यसचिवज्ञबृहस्पतीनामुत्थापनं शुभकरं भुवि वज्रपाणेः ॥ २६ ॥ शशिनि शुभग्रहभवने कुर्यादिंद्रध्वजोत्सवं सत्सु॥ केंद्रत्रिकोणगेषु प्रशस्तवेलाविलग्नेषु ॥ २७ ॥ गुडापयायमाद्यैर्विप्रानभ्यर्च्य दक्षिणाभिस्तु ॥ श्रवणेन द्वादश्यामुत्थाप्यान्यत्र श्रवणेन ॥ २८ ॥ तत्र पातकाप्येता विजयाय भवति गदा पीता ॥ जयदा विचित्ररूपा रक्ता शस्त्रप्रकोपाय ॥ २९ ॥ शक्रोत्सवं जयेप्सुः श्रवणेन द्वादशीसमेतेन॥ विहिते लग्ने कुर्यात्तद्योगे पुनः श्रवणे ॥ ३० ॥ श्रवणद्वादश्यां योगयोगो न विद्यते ॥ तत्र तु श्रवणे कुर्यादिंद्रियोत्पातनं नृपः ॥ ३१ ॥ एकोऽपि जीवेंदुजभार्गवाणां केंद्रे यदि स्यादथवा त्रिकोणे ॥ उत्पातकाले त्रिदशाधिपस्य निहत्य दोषान्विजयं करोति ॥ ३२ ॥ केंद्रत्रिकोणे च शुभग्रहैश्च दुश्चिक्यलाभोपगतैश्च सौम्यैः ॥ उत्थापयेद्देवगणाधिपूज्यं सौम्यग्रहाणामुदये स्वभावः ॥ ३३ ॥ अंतकस्याधिसंध्यांतं पदस्यादष्टमेपदे ॥ शक्रं विसर्ज्जयेत्तत्र नोवधिश्चाष्टमोपरि ॥ ३४ ॥ पातयेदष्टमे चाह्नि लोकपालं यमान्तके॥ निशायां सर्वसत्वानां करोति कुशलं भुवि॥ ३५॥

नवमे तु दिने दृष्टो राज्ञां शक्रो भयप्रदः॥ततोनादृत्य याम्यां तमष्टम्यां निशि तापयेत् ॥ ३६ ॥ अष्टमात्परतः शक्रं याम्यां तस्यानुरोधतः॥ ये पश्यंति महीपालास्तेषां राष्ट्रं विनश्यति ॥ ३७ ॥ न भवति भरणीशेषं निशि सुरराजं विसर्ज्जयेन्नृपतिः ॥ पौरपुरोहितयुक्तो याम्यमेते निशां चेतः ॥ ॥ ३८ ॥ याम्यां ततो देवपतिर्निशायां विसर्ज्जनं शांतिकरं नृपाणाम् ॥ दिवा कृतांतांतपदप्रसंगे निशावसाने भरणीप्रभागे ॥ ३९ ॥ क्रव्यादकौशिककपोतककाककंकैः केतुस्थिते महदुशंति भयं नृपस्य ॥ चापेन वापि युवराजभयं वदंति श्येनोपि लोचनभयं नियतं करोति ॥ ४० ॥ छत्रभंगपतने नृपमृत्युस्तस्करान्मधुकरोति निलीनाम् ॥ हंति वाप्यथ पुरोहितमुक्ता पार्थिवस्य महिषीमशनिश्च ॥ ४१ ॥ राज्ञीविनाशं पतिता पताका करोत्यविष्टिं विठकस्य पातः ॥ मध्याग्रमूलेषु च केतुभंगं निहंति मंत्री क्षितिपालपौरान् ॥ ४२ ॥ वज्रः शंकुच्छेदने बालपीडा राज्ञो मातुः पीडनं मातृकायाः॥ यद्यत्कुर्युर्बालकाश्चारणश्च तत्तत्ताद्दग्भावि पापं शुभं वा ४३॥ इंद्रध्वजादर्शफलाद्विचित्रैर्विचित्रमालाकदलीक्षुदंडैः ॥ सव्यालसिंहैर्विठकैर्गवाक्षैरलंकृतं दिक्षु च लोकपालैः ॥ ४४ ॥ अविरलजननादैर्मंगलाशीःप्रणामैः पटुपटहमृदंगैः शंखभेर्य्यादिभिश्च ॥ स्तुतिविहितवचोभिः पाठविद्भिश्चविप्रैरसुरविहितनष्टं केतुमुत्थापनं च ४५॥ फलदधिघृतलाजाक्षौद्रपुष्पार्घहस्तैः प्रणिपतितशिरोभिस्तोत्रवद्भिश्च पौरैः ॥ सतुमणिरिवभर्त्तुः

केतुमीशप्रजानामरिनगरनताग्रं कारयेद्विबुधाय ॥ ४६ ॥
नातिध्रुवं च न विलंबितमप्रकंपयविध्वस्तमाल्यपिटका-
दिविभूषणंच ॥ तस्यामनिष्टमशुभं परतोऽन्यथा यत्तच्छां-
तिभिर्नरपतेः शमयेत्पुरोधाः ॥४७॥ श्रवणाचरणे यावत्पूजां
कृत्वा विधानतः ॥ रात्रौ विसर्जयेद्देवं मंत्रेणानेनपांडव
॥ ४८ ॥ सार्द्धं सुरासुरगणैः पुरंदर शतक्रतो ॥ उपहारं
गृहीत्वैवं महेंद्रध्वज गम्यताम् ॥ विसर्जनाद् प्राक्पूजाम-
नेन मंत्रद्वयेन च ॥ ४९ ॥ एह्येहि सर्वामरसिद्धसाध्यैरभि-
ष्टुतो वज्रधरामरेश ॥ समुत्थितस्त्वं श्रवणाद्यपादे गृहाण
पूजां भगवन्नमस्ते ॥ ५०॥ वज्रहस्त सुरारिघ्न बहुनेत्र पुरं-
दर ॥ रक्षार्थं सर्वसत्वानां पूजेयं प्रतिगृह्यताम् ॥ ५१ ॥
नमस्ते देवदेवेश सहस्राक्ष नमोऽस्तुते ॥ आखंडल नमस्ते-
ऽस्तु पुष्टिं देहि श्रियं स्थिराम् ॥५२॥ कीर्तिं धृतिं तथा वि-
द्यां मेधां देहि यशः सदा ॥ आरोग्यं देहि देवेश धनधान्या-
दिकं तथा ॥ ५३ ॥ इतींद्रोत्थापनविधिः ॥ मासि भाद्र-
पदे नैव पुण्येनोत्सावनं यदा ॥ उपाकर्म ततः कुर्य्यान्नक्षत्रे
सूर्य्यदैवते ॥५४ ॥ छंदोगा मिलिताः कुर्युः प्रातर्नैसर्गिकीं
क्रियाम् ॥ अपराह्णे ह्युपाकर्म पुष्यहस्तर्क्षयोर्द्वयोः ॥५५ ॥
इत्युपाकर्म॥आषाढीमवधिं कृत्वा यः स्यात्पक्षस्तु पंचमः ॥
तत्र श्राद्धं प्रकुर्वीत कन्यादित्ये तु मानवः ॥ ५६ ॥ अंते
वा यदि वा मध्ये यत्र कन्यां रविर्व्रजेत् ॥ सपक्षः सकलः पूर्ण
अत्र श्राद्धं विधीयते ॥ ५७ ॥ पुत्रानायुस्तथारोग्यमैश्वर्य्य-

मतुलं तथा ॥ प्राप्नोति पंचमे कृत्वा श्राद्धं कामांस्तथा परान् ॥ ५८ ॥ एतान्नैव हि प्राप्नोति पंचमं यो व्यतिक्रमेत् ॥ तस्मान्नातिक्रमेद्विद्वान् पंचमे पैतृकं विधिम् ॥ ५९ ॥ नित्यं नैमित्तिकं काम्यमेकोद्दिष्टं तथापरम् ॥ पार्वणं चापि विज्ञेयं श्राद्धं स्यात्पड्विधं तथा ॥ ६० ॥ यस्मिन्राशौ स्थिते सूर्य्ये विपत्तिं यांति मानवाः ॥ तेषां तत्रैव कर्त्तव्याः पिंडदानोदकक्रियाः ॥ ६१ ॥ उच्छिष्टं शिवनिर्माल्यं वमनं मृतकर्पटम् ॥ श्राद्धे सप्त पवित्राणि दौहित्रं कुतपस्तिलाः(?)॥ ६२॥ श्राद्धे त्रीणि पवित्राणि दौहित्रं कुतपस्तिलाः ॥ त्रीणि चात्र प्रशंसंति सत्यमक्रोधमत्वराम् ॥ ६३ ॥ दौहित्रं चोच्यते ( ? ) खड्गोललालोम्रे प्रजायते ॥ तस्य खड्गस्य यत्पात्रं दौहित्रमिति तत्स्मृतम् ॥ ६४ ॥ दिवसस्याष्टमे भागे मंदो भवति भास्करः ॥ स कालः कुतपो ज्ञेयः पितॄणां दत्तमक्षयम् ॥ ॥ ६५ ॥ सप्तमात्परमो यस्तु नवमादधरस्तु यः ॥ स तयोरेव मध्यस्थः कुतपः स उदाहृतः ॥ ६६ ॥ ब्राह्मणः कंबलो नागः सूर्य्योऽग्निरतिथिस्तथा ॥ तिला दर्भाश्च कालश्च नवैते कुतपाः स्मृताः ॥ ६७ ॥ आमश्राद्धं तु पूर्वाह्णे एकोद्दिष्टं च मध्यमे ॥ पार्वणं चापराह्णे च वृद्धिश्राद्धं तुलाग्निकम् ॥ ॥ ६८ ॥ अपत्नीकः प्रवासी च यस्य भार्या रजस्वला ॥ आमश्राद्धं द्विजो दद्याच्छूद्रो दद्यात्सदैव हि ॥ ६९ ॥ नंदायां भार्गवदिने त्रयोदश्यां त्रिजन्मनि ॥ अत्र श्राद्धं न कुर्वीत पुत्रदारधनक्षयात् ॥ ७० ॥ संक्रांत्यामुपवासेन

पारणेन युधिष्ठिर ॥ नंदायां पिंडदानेन ज्येष्ठपुत्रो विनश्यति ॥ ७१ ॥ मासि संवत्सरे चैव तिथिवेधो यदा भवेत्॥ पित्र्ये पूर्वा तिथिर्ग्राह्या दैवे कर्मणि चोत्तरा ॥ ७२ ॥ तिथिवेधे यदैकस्मिन्भवेन्मासि कथंचन ॥ श्राद्धे पूर्वा तिथिर्ग्राह्या वृद्धादावुत्तरा स्मृता ॥ ७३ ॥ एकत्रैव स्थिते सूर्य्ये यदि स्यात्तु तिथिद्वयम् ॥ एकोद्दिष्टं तु पूर्वत्र न परत्र तदा भवेत् ॥ ७४ ॥ व्रतोपवासस्नानादौ घटिकापि यदा भवेत् ॥ उदये सा तिथिर्ज्ञेया श्राद्धादावस्तगामिनी ॥ ७५ ॥ देवकर्म तया कार्य्यं यस्यामभ्युदितो रविः ॥ सा तिथिः सकलो ज्ञेया विपरीता तु पैतृके ॥ ७६ ॥ मासि मास्यसिते पक्षे पंचदश्यां नरेश्वर ॥ तथाष्टकासु कुर्वीत कामान्याञ्छृणुष्व मे ॥ ७७ ॥ श्राद्धार्थमागतं द्रव्यं विशिष्टमथवा द्विज ॥ श्राद्धं विज्ञाय कुर्वीत व्यतीपातसमं तथा ॥ ७८ ॥ विषुवे वापि संप्राप्ते ग्रहणे सोमसूर्य्ययोः ॥ समस्तेष्वेव कुर्वीत राशिष्वर्के तु गच्छति ॥ ७९ ॥ नक्षत्रग्रहपीडासु दुष्टस्वप्नावलोकने ॥ इच्छाश्राद्धं प्रकुर्वीत नवसस्यागमे तथा ॥ ८० ॥ श्राद्धविघ्ने समुत्पन्ने अंतरा मृतसूतके ॥ अमावास्यां प्रकुर्वीत वदंत्येके मनीषिणः ॥ ॥ ८१ ॥ नासिकाभ्यंतरे प्राप्ते मृतस्याविहिते दिने ॥ वदंति शुद्धौ तत्कार्य्यं श्राद्धमेव न संशयः ॥ ८२ ॥ मरणं मरणेनैव सूतकं सूतकेन च ॥ उभयोरपि यः शे-

पस्तेनशौचेन शुद्ध्यति ॥ ८३ ॥ सचांते प्रसवे याते पूर्वाशौचेन शुद्ध्यति ॥ गुरुणा लघु शुद्ध्येत लघुना न च तद्गुरु ॥ ८४ ॥ मृतके सूतके चैव सूतकेऽपि च मृतके ॥ शावेन शुद्ध्यते सूती सूत्या न शुद्ध्यते शवः॥८५॥पुनर्भो जनमध्वानं निद्राध्ययनमैथुनम् ॥ दानं प्रतिग्रहं होमं श्राद्धं कृत्वाऽष्ट वर्ज्जयेत् ॥ ८६ ॥ योगो मघात्रयोदश्योः कुंजरच्छायसंज्ञकः ॥ भवेन्मघायां संयाते शशिन्यर्के करे स्थिते ॥८७॥ इत्यपरपक्षश्राद्धम् ॥ आर्द्रायां पूजयेद्देवीं मूलेन प्रतिपूजयेत् ॥ उत्तरेणार्चनं कृत्वा श्रवणेन विसर्ज्जयेत् ॥ ८८ ॥ मूलेन प्रतिपूजयेद्भगवतीं चंडांशुचंडाकृतिमष्टम्यावरणं तिथिं च दशमीं संप्राप्य संप्रेषयेत् ॥ ८९ ॥ सप्तम्यां मूलयोगे प्रथमपदगते पत्रिका पूजनीया स्वष्टम्यां रात्रिभागे कृतनियमविधौ यज्ञकर्मप्रदिष्टम् ॥ नानाजीवाभिघाता तिथिरथ नवमी रौद्रदृष्टिस्वरूपा संप्राप्ते वैष्णवाख्ये नियमकृतविधिः प्रेषयेत्तां दशम्या ॥ ९० ॥ मूलं प्राप्य प्रथमचरणेऽभ्यर्चनं चंडिकायाः कृत्वाऽष्टम्यामशनरहितैरत्यक्तनिद्रैः सुपूजाम् ॥प्रातःकाले पशुबलिविधिं स्नानदानं नवम्यां निर्माल्यं तु श्रवणदशमीवासवावाक्ययुक्ताः(?)॥ ॥ ९१ ॥ जन्माष्टमी च दूर्वा च दुर्गाऽनंगत्रयोदशी ॥ पूर्वविद्धा च कर्त्तव्या नान्यच्छुक्ला कदाचन ॥ ९२ ॥ ऋक्षत्रये च मूलादौ सप्तम्यामश्विने सिते ॥ चंडिकामुपहारैश्च पूजयेद्राष्ट्रवृद्धये ॥ ९३ ॥ इति दुर्गास्तवः ॥ कुर्या-

ज्जागरमष्टम्यां नवम्यां विधिवद्बलिम् ॥ दशम्यां बलवृद्ध्यर्थं कुर्य्यान्नीराजनं नृपः ॥ ९४ ॥ उमाया नवमी प्रोक्ता सहस्वातिभिरष्टमी ॥ द्वयोरेका महापुण्या उमामाहेश्वरी स्मृता ॥ ९५ ॥ अष्टम्यां पूजितो रुद्रो नवम्यां शक्तिरुच्यते ॥ द्वयोर्योगे तु संप्राप्ते पूजायां तु महाफलम् ॥ ९६ ॥ उत्सवविधिं च विततं बलिं च नीराजनं च बलवृद्धौ ॥ अश्वयुजेऽष्टम्यादिषु कुर्वीत यथाक्रमं नृपतिः ॥ ९७ ॥ इति नीराजनविधिः ॥ कौमुदी पक्षराजश्च कौमुदी फाल्गुनी तथा ॥ वसंति कति विज्ञेया देशस्य महिमा स्मृता ॥ ९८ ॥ आश्विने मासि पौर्णमास्यामक्षैर्जागरणं निशि ॥ कौमुदी सा समाख्याता कार्या लोकैर्विभूतये ॥ ९९ ॥ कोजागरः सिते पक्षे यदा भानुस्तुलां व्रजेत् ॥ उत्तिष्ठत्यग्रतो विष्णुः पश्चात्प्रेतचतुर्दशी ॥ ॥ १००॥ दिनाधिपे भूततिथौ तुलायां चित्रायुक्ते दिवसे कुजस्य॥एतेषु कामान्प्रवदंति नूनं यथार्द्धरात्रं कथितं पुराणे ॥ १ ॥ चित्रायोगे भौमवारे चैत्रे कृष्णचतुर्दशी ॥ नहि प्रेतत्वमाप्नोति नरो रुद्रालये स्थितः ॥ २ ॥ तुलायां वृश्चिके वापि उपस्थिते दिवाकरे ॥ प्रेतपक्षकरः कार्यः कन्यायां न कदाचन ॥ ३ ॥ कुजवारसमायुक्ता कृष्णा चैव चतुर्दशी ॥ नक्तं चित्रासंयुक्ता महापुण्यतमा स्मृता ॥ ४ ॥ वियुक्ता भौमवारेण चित्रभे च तथैव च ॥ तिथिरेव सदा पूज्या नात्र कार्या

विचारणा ॥ ५ ॥ पूज्या कृष्णचतुर्दश्यां चित्रांगारतुलान्विता ॥ उपोष्य लीयते पापं हेतुकेश्वरसन्निधौ ॥ ६ ॥ शिवेशूले तटे कन्यां वालखिल्यैः पुनर्भुवि ॥ स्नात्वा तु त्रिदिवं यांति ये मृतास्तेऽपुनर्भवाः ॥ ७ ॥ इति प्रेतचतुर्दशी ॥ अमावास्यां तुलादित्ये लक्ष्मीर्निद्रां विमुंचति ॥ तस्मिन्युक्ते सदा विष्णुस्तुलायामथ वृश्चिके ॥ ८ ॥ चित्रायां चित्रभानुर्विचरति सविधुर्वासुदेवो यदा वा यावंती भोजनाभो जलनिधिशयने योगनिद्रां जहाति ॥ भास्वत्पिष्टप्रदीपप्रतिहररजनीघोरसांद्रांधकारे तस्मिँल्लक्ष्मीः प्रबोधं व्रजति भगवती सौख्यहेतुर्नराणाम् ॥ ९ ॥ तौलिस्थे तरणौ निशांतसमये प्राप्ते गजेंद्रे तथा वासन्ते मृगलांछने शुभतिथौ पिष्टप्रदीपांबुजे ॥ कृत्वा गंधनिवेद्यवाद्यरुचिरैः कह्लारपुष्पार्चिता वंद्या सा सुखरात्रिकानरपतेर्दुःस्वप्नपापापहा ॥ १० ॥ इति सुखरात्रिविधिः ॥ सुखरात्रिपराचैव द्वितीया या सिता भवेत् ॥ तस्यां भ्रातृद्वितीयायां भ्रातरं भोजयेत्स्वसा ॥ ॥ ११ ॥ कार्तिके शुक्लपक्षस्य द्वितीयायां युधिष्ठिर ॥ यमो यमुनया पूर्वं भोजितः स्वगृहागतः ॥ १२ ॥ इति भ्रातृद्वितीया ॥ कार्तिके मासि यो दीपं दद्यादुद्दिश्य देवताम् ॥ पितरं वार्चयेद्यश्च स सदा तत्फलं लभेत् ॥ ॥ १३ ॥ घृतेन दीपं प्रज्वाल्य तिलतैलेन वा पुनः ॥ दीर्घायुर्वपुषा युक्तश्चक्षुषा न च हीयते ॥ १४ ॥ दीपदान-

परो नित्यं ज्ञानदीपेन दीप्यते ॥ स्फुटबुद्धींद्रियश्चापि न कदाचित्स मुह्यति ॥ १५ ॥ भवेदूर्ध्वगतिर्दीपो न कदाचिदधोगतिः ॥ दातापि दीप्यते चैव तिर्यग्योनिं नचाप्नुयात् ॥ १६ ॥ दीपं ददाति यो नित्यं देवतायतनेषु च ॥ चतुष्पथेषु विप्रेषु रूपवान् सुभगो भवेत् ॥ १७ ॥ ज्वलमानं तथा दीपं हरेन्निर्वापयेन्न च ॥ दीपहर्ता भवेदंधस्तमोगतिहतप्रभः ॥ १८ ॥ दामोदराय नभसि तुलायां दोलया सह ॥ प्रदीपं ते प्रयच्छामि नमोनंताय वेधसे ॥ १९ ॥ इत्याकाशदीपः ॥ कार्तिकाद्या द्विधा मासाः फाल्गुनस्तु द्विधः स्मृतः ॥ अंतोपातैस्त्रिभिर्मासैः कार्तिक्यादिव्यवस्थया ॥ २० ॥ अतः श्रावणमासे च मासाश्चांद्रेण कीर्तिताः ॥ मासाः सौरेण मानेन नक्षत्रेण च नाडिकाः ॥ २१ ॥ सौरो मासो विवाहादौ यज्ञादौ सावनः स्मृतः ॥ प्रतिसंवत्सरश्राद्धे मासश्चांद्रमसः स्मृतः ॥ २२ ॥ तुलामकरमेषेषु प्रातःस्नायी भवेत्सदा ॥ हविष्यं ब्रह्मचर्यं च महापातकनाशनम् ॥ २३ ॥ यदीच्छेद्विपुलान्भोगांश्चंद्रसूर्यग्रहोपमान् ॥ कार्तिके सकले मासे प्रातःस्नायी भवेत्सदा ॥ २४ ॥ इति कार्तिकस्नानादिचांद्रसौरसावनविधिः ॥ *वृश्चिकस्थे सहस्रांशौ मृगशीर्षभसंयुते ॥* पौर्णमास्यां प्रदोषे तु देवतामर्चयेत्सदा (?) ॥ २५ ॥ माघशुक्लचतुर्थ्यां तु वरमाराध्य च श्रियम् ॥ पंचम्यां कुंदकुसुमैः पूज्या कौंदी समृद्धये ॥ २६ ॥ वरचतुर्थीपंचम्यो पौर्ण-

मास्यौ भवेत्य (?) कामं नक्षत्रयोगतः ॥ २७ ॥ माघ एव तु माघी स्यान्मकरस्थे दिवाकरे ॥ श्रवणे स्यायदा भानुः पित्र्ये चैव निशाकरः ॥ २८ ॥ महामाघी तदा ज्ञेया इति प्राह बृहस्पतिः ॥ माघे मासि रटन्त्यापः किंचिदभ्युदिते रवौ ॥ २९ ॥ ब्रह्मघ्नं वा सुरापं वा कंपंतं तं पुनीमहे ॥ माघस्नानं महापुण्यं सर्वपापप्रणाशनम् ॥ ॥ ३० ॥ ऋषयस्तेन धर्मेण प्राप्ता ब्रह्मसनातनम् ॥ सूर्य्यग्रहणतुल्यापि शुक्ला माघस्य सप्तमी ॥ ३१ ॥ तस्यामुदयवेलायां स्नात्वा पापैः प्रमुच्यते ॥ जननी सर्वभूतानां सप्तमी सप्तसप्तिका ॥ ३२ ॥ सप्तव्याहृतिके देवि नमस्ते सूर्य्यमण्डले ॥ यद्यज्जन्मकृतं पापं मया सप्तसु जन्मसु ॥ ॥ ३३ ॥ तन्मे रोगं च शोकं च माकरी हंतु सप्तमी ॥ ॥ ३४ ॥ इति माघसप्तमी ॥ शुक्लाष्टम्यां तु माघस्य दद्याद्भीष्माय यो जलम् ॥ संवत्सरकृतं पापं तत्क्षणादेव मुच्यते ॥ ३५ ॥ वैयाघ्रपद्यगोत्राय सांकृत्यप्रवराय च ॥ अपुत्राय ददाम्येतत्सलिलं भीष्मवर्मणे ॥ ३६ ॥ इति भीष्माष्टमी ॥ फाल्गुने पौर्णमास्यां तु परवासविलासिका ॥ ज्ञेया फाल्गुनिका सा च कार्य्या लोकैर्विभूतये ॥ ३७ ॥ फाल्गुनीऋक्षसंयुक्ते कुंभस्थे च दिवाकरे ॥ रथस्थं स्कंदमालोक्य मुच्यते ब्रह्महत्यया ॥ ३८ ॥ स्कंदतीर्थे नरः स्नात्वा मौनं कृत्वा शिखिध्वजम् ॥ स्नानं प्रदक्षिणीकृत्य मुच्यते ब्रह्महत्यया ॥ ३९ ॥ संयोगे पुष्यद्वादश्योः

हीं(?)भवने ॥ चैत्रासितभूततिथौ पापरुजं दूरतो धत्ते॥५०
इति चैत्रमासिकव्रतनिर्णयः॥ ज्येष्ठं संवत्सरे चैव ज्येष्ठमासस्य पूर्णिमा ॥ जेष्ठासेन यदा युक्ता महाज्येष्ठी प्रकीर्तिता ॥ ५१ ॥ ऐंद्रे शशीगुरुश्चैव प्राजापत्ये रविस्तथा ॥ पूर्णिमा ज्येष्ठमासस्य महाज्येष्ठी भवेत्तदा ॥ ५२॥ माससंज्ञे यदा ऋक्षे चंद्रः संपूर्णमंडलः ॥ गुरुणा याति संयोगं सा तिथिर्महती स्मृता५३॥महामाघी प्रयागे तु नैमिषे फाल्गुनी तथा ॥ शालिग्रामे महाचैत्री कृता पुण्यतमा स्मृता ॥ ५४ ॥ महाद्वारे च वैशाखी ज्येष्ठी तु पुरुषोत्तमे॥आषाढी कनखले चैव केदारे श्रावणी तथा ॥ ५५ ॥ महाभाद्री बदर्य्यां च कुब्जायां तु महाश्विनी ॥ पुष्करे कार्तिकी कन्याकुब्जे मार्गी सदा स्मृता ॥ ५६ ॥ अयोध्यायां महापौषी कृताः स्युः सुमहाफलाः॥स्नानं ह्येतेषु कर्त्तव्यं मानवैः पुष्टिकांक्षिभिः ॥ ॥ ५७ ॥ वृषराशिस्थिते सूर्य्ये शुक्लपक्षे चतुर्दशी ॥ प्रोक्ता रुद्रार्चनायैव सा च सम्यक्चतुर्दशी ॥ ५८ ॥ ज्येष्ठे सिते चतुर्दश्यां सावित्रीव्रतमुत्तमम् ॥ अवैधव्याय कुर्वंति स्त्रियः श्रद्धासमन्विताः ॥ ५९ ॥ इति सावित्रीव्रतम् ॥ वृषराशिस्थिते सूर्य्ये शुक्लपक्षे चतुर्थिका ॥ पंचतपा तु सा ज्ञेया पाषाणा सा विधीयते ॥ ६० ॥ इति पाषाणचतुर्थी ॥ ज्येष्ठे मासि सिते पक्षे षष्ठी वारुणसंयुता ॥ व्यजनैककरास्तस्यां रटंति विपिने स्त्रियः ॥६१॥ इति अरण्यषष्ठी ॥ ज्येष्ठशुक्लदशम्यां तु हस्तयोगेन जाह्नवी ॥ हरेद्दे

कं प्राप्य निष्फलम् ॥ ७५ ॥ निरंशेन यदा भानुः पूर्वेपि यद्दिनद्वये ॥ पूजयेद्वासरं पूर्वमपरं पुण्यवर्जितम् ॥ ॥ ७६ ॥ निशार्द्धे चलिते भानौ निरंशं चेद्दिनद्वयम् ॥ पूर्वे त्वहनि कर्तव्यं स्नानदानजपादिकम् ॥ संपूर्णे चार्द्धरात्रे तु भानुः संक्रमते यदा ॥ ७७ ॥ तदा दिनद्वयं पुण्यं युक्तौ मकरकर्कटौ ॥ रात्रौ संक्रमिते भानौ विषुवत्ययने दिने ॥ ७८ ॥ उपरागे तु तत्कालं व्यतीते विषुवद्वये ॥ भविष्यत्ययने पुण्यमतीते चोत्तरायणे ॥ ७९ ॥ मृगकर्कटसंक्रांती द्वे उदग्दक्षिणायने ॥ ग्रहोपरागे तत्कालमतीते विषुवद्वये ॥ ८० ॥ अयने विषुवे द्वेच व चतस्रः षडशीतयः ॥ चतस्रो विष्णुपदयश्च संक्रांत्यो द्वादश स्मृताः ॥ ॥ ८१ ॥ मृगकर्कटसंक्रांती द्वे उदग्दक्षिणायने ॥ विषुवती तुलामेषे गोलमध्यगताः पराः ॥ ८२ ॥ मिथुनमीनधनुःकन्याः षडशीतिरुदाहृताः ॥ वृषवृश्चिककुंभेषु सिंहे विष्णुपदी स्मृता ॥ ८३ ॥ विषुवन्मेषतुलायामयनं मकरे रवौ कुलीरे च ॥ षडशीतिर्द्विशरीरे विष्णुपदी च स्थिरे राशौ ॥ ८४ ॥ अयने कोटिगुणं पुण्यं लक्षं विष्णुपदीफलम् ॥ षडशीतौ सहस्रं च षडशीत्यां शतं स्मृतम् ॥ ८५ ॥ शतमिंदुक्षये दानं सहस्रं तु दिनक्षये ॥ विषुवे शतसाहस्रं व्यतीपाते त्वनंतकम् ॥ ८६ ॥ शरदि विषुवे रात्रौ हेमंते च यदा दिवा ॥ उभयोः सस्यवृद्धिः स्याद्विपर्यासे विपर्ययम् ॥ ८७ ॥ मेषं याति यदा दिनपती रात्रौ तुलां

गच्छति योतंते धनधान्यवस्त्रनिचयैः सम्यक् प्रजाः पूजिताः॥ साधूनामुदयस्तदा वसुमती सस्यैः समग्रा भवेद्राजानोऽपि परस्परं प्रियतमा मुंचंतिवि (?) ति ॥ ८८ ॥ समः संक्रमते भानुर्गरादिकरणेषु च ॥ आदिद्वयोरुपविष्ट ऊर्द्धश्चैव ततो द्वये ॥ ८९ ॥ दुर्भिक्षं रोगसंपत्तिमूर्द्धं संक्रमते रविः॥ समः करोति कल्याणमुपविष्टः समं फलम् ॥ ९० ॥ मृते जन्मनि संक्रांतौ ग्रहणे चंद्रसूर्ययोः ॥ अस्पर्शस्पर्शने चैव न स्नायादुष्णवारिणा ॥ ९१ ॥ इति संक्रांतिनिर्णयः ॥ एकस्मिन्सावने चाह्नि तिथीनां त्रितयं यदा ॥ तदा दिनक्षयः प्रोक्तस्तत्र साहस्रिकं फलम् ॥ ९२ ॥ अहस्पृग्दिवसश्चैव महापुण्यतमः स्मृतः ॥ तिथित्रयस्य संस्पर्शाञ्यहस्पृक्त्वित्युदाहृतः ॥ ९३ ॥ दिनक्षये पर्वणि पातकाले शशांकसूर्यग्रहणेऽयने च ॥ धर्मं विदध्याद्विषुवद्वये च यस्तस्य धर्मक्षयधर्मकोपः ॥ ९४ ॥ इति दिनक्षयः ॥ मासो रवेः स्यात्प्रतिराशिभोगः शुक्लादिदर्शांतमितोऽथ चंद्रः॥ त्रिंशद्दिनानामथ सावनाख्ये भानां च चक्रभ्रमणात्तथेंदोः ॥ शुक्लादिः स्याच्चांद्रस्त्रिंशद्दिवसस्तु सावनो मासः ॥ रविसंक्रांतिश्चांद्रः सौरोऽपि निगद्यते तज्ज्ञैः ॥ ९५ ॥ चांद्रो मासो विवाहादौ यज्ञादौ सावनः स्मृतः ॥ प्रतिसंवत्सरश्राद्धे मासश्चांद्रमसः स्मृतः ॥ ९६ ॥ प्राणैः षड्भिर्विकला विकलानां षष्टिभिश्च कलाः ॥ कलिकाषष्ट्यांशांऽशास्त्रिंशद्राशिः क्रियादयस्ते च ॥ ९७ ॥ तैर्द्वादशभिर्भगणः फल्गुः शून्यानि सप्त-

नववेदाः ॥ रविभगणस्तेत्र(?)सहीनाश्चतुर्युगं भवति॥९८॥ तद्दशगुणितं कृतं चतुर्भिस्त्रिभिस्त्रेता ॥ द्विगुणो द्वापर एवं कलिरेकगुणः समाख्यातः ॥ ९९ ॥ अष्टादश निमेषास्तु काष्ठा त्रिंशत्तु ताः कला ॥ तास्तु त्रिंशत् क्षणस्तेतु मुहूर्तो द्वादश स्मृताः ॥ १०० ॥ ते तु त्रिंशदहोरात्रः पक्षस्ते दश पंच च ॥ पक्षौ पूर्वापरौ शुक्लकृष्णौ मासस्तु तावुभौ ॥ ॥ १ ॥ वर्षं द्वादशभिर्मासैः सततं पारलौकिकम् ॥ मासेन स्यादहोरात्रः पैत्रो वर्षेण दैवतः ॥ २ ॥ दैवे युग-सहस्रे द्वे ब्राह्मः कल्पौ तु तौ नृणाम् ॥ मन्वंतरं तु दिव्यानां युगानामेकसप्ततिः ॥ ३ ॥ इति कालमानम् ॥ वाराह-मांडव्यपराशराद्या गर्गांगिरास्ते मुनयो वदंति ॥ वक्राति-चारैः सुरराजमंत्री यत्रागतस्तत्र फलं ददाति ॥ ४ ॥ वक्रातिचारोपगता ग्रहेंद्रा यत्रागतास्तस्यफलंवदन्ति ॥ यत्र संस्थितस्य वात्स्योवदति विवाहे पूर्वापरयोः फलं राश्योः(?) ॥ ५ ॥ वक्रोपगे रविसुते धरणीसुते वा मूलार्कहस्तमघरे-वतिरौद्रभेषु ॥ छत्रोपभंगपतनानि च सैनिकानां सर्वत्र लोक-मरणं जलधौ नरेशः ॥ ६ ॥ इति चारचिंता ॥ वस्त्रं तु त्रिगुणीकृत्य क्षोणीपृष्ठे प्रदापयेत् ॥ मध्ये भवति तच्चिह्नं तदा मृत्युं विनिर्दिशेत् ॥ ७ ॥ ऐंद्यामैश्वर्यमाग्नेय्याम-ग्निभयं याम्यां बंधुविनाशनम् ॥ नैर्ऋत्यां पुत्रलाभो वा सव्ये मित्रसमागमः ॥ ८ ॥ सौम्येपि अर्थलाभश्च ईशान्यामी-

प्सितं फलम् ॥९॥ इति मूषकाग्निजग्धदग्धफाटितवस्त्रफलम् ॥ वज्रासितोमरशरांकुशपाशवज्रैः शक्त्या धनुःपरशुशंखमृणालपत्रैः॥ श्रीवत्समत्स्यमकरध्वजकुंजराद्यैर्हस्तादिलांछितनरः सुखभाङ् नरेंद्रः ॥ १० ॥ नाभीगभीरपरिमंडलपीनपक्षरेखात्रयांकितगलस्त्रिगलत्वमुखे (?) ॥ श्रोणीललाटतटकूर्मसमुन्नतत्वं गूढो मणिश्च विपुलां श्रियमादधाति ॥ ॥ ११ ॥ नाभीवचः सत्वमिति प्रशस्तं गभीरमेतत्त्रितयं नराणाम् ॥ उरो ललाटं वदनं च पुंसां विस्तीर्णमेतत्त्रितयं वदंति ॥ १२ ॥ नेत्रांतपादकरताल्वधरोष्ठजिह्वारक्तानखाश्च खलु सप्त सुखावहानि ॥ सूक्ष्माणि पंच दशनांगुलिपर्वकेशनासापुटाः कररुहाश्च न दुःखजानः ॥ १३ ॥ हनुलोचनबाहुनासिकाः स्तनयोरंतरमत्र पंचमम् ॥ अतिदीर्घमिदं तु पंचमं न भवत्येव नृणां च भूभृताम् ॥ १४ ॥ या स्यान्नता विरलतिमिवदंतपंक्तिर्नासाग्रविभेसतिना च सुशोभनेन ॥ विख्यातकीर्तिर्निपुणो विजयोपभोक्ता मध्ये वयो भवति भाग्यसितातपत्रः ॥ १५ ॥ इति पुरुषलक्षणम् ॥ उपचयभवनोपयातस्य मानोर्दिनकरा (?) नगहेमगराश्मकाष्ठास्थिमौक्तिकानपि नरेंद्र ॥ १६ ॥मेषोदये समरसाहसकूटकर्मराज्याभिषेकविषयाधिककर्मसिद्धिः ॥ धीकार्यपत्नपशुरत्नसुतार्थपण्यकन्याकृषीदिनान्युदयवृषस्य (?) ॥ १७॥ सिंहवशीक रणविद्रुमसाहसानिभूषाभिषेकमृगयानृपसेवनानि ॥प्राव्रज्यमंत्रगमनं विपणिः कृपिश्च विज्ञानधातुवनिताभर-

णानि षष्ठे ॥ १८ ॥ चित्रक्रियाविपणिपण्यनिषेवणानि योषासुहृन्नृपतियोधविधिस्तुलायाम् ॥ क्षुद्रक्रियाहिविषशस्त्रहुताशचौर्यहिंसातिसाहसघनानि च वृश्चिके स्युः ॥ १९ ॥ ध्यानक्रियानियमधर्मभिषग्व्रतानि संग्रामहस्तिहयकर्मच चापलग्ने ॥ स्नेहोपभोगकपटाशुभखंडनानि पाखंडनीचविधयो मकरे विलग्ने ॥ २० ॥ भेदांबुभागपरसंशयनीचकर्मदंभव्रतानि च भवंत्युदये घटस्य ॥ मीनोदये च शुभमंगलपौष्टिकानि कर्माणि चाप्यभिहितानि च चापलग्ने ॥ २१ ॥ इति मेषादिलग्नफलम् ॥ इति श्रीमहाराजाधिराजश्रीभोजविरचितं राजमार्तंडाभिधानं ज्योतिःशास्त्रं समाप्तम् ॥

श्रीशाके हरिबाहुरामद्विगुणे कृष्यंकिते भूशुभे राधे मासि सिते उमापतितिथौ शीतांशुघस्रे तथा ॥ द्रोणाग्रस्य अधः पुरे निवसतो यातो हि चंद्रावती तारावल्लभशर्मणा व्यलिलिखज्जैदेवशर्मा द्विजः ॥ १ ॥ करकृतमपराधं क्षंतुमर्हंति संतः । यादृशं पुस्तकं दृष्टं तादृशं मुद्रितं मया ॥ यदि शुद्धमशुद्धं वा मम दोषो न विद्यते ॥ शुभमस्तु सर्वेषाम् ॥ छ ॥ ॥

---

पुस्तक मिलनेका ठिकाना-

खेमराज श्रीकृष्णदास

"श्रीवेङ्कटेश्वर" छापाखाना-( बम्बई. )

इति
राजमार्तण्डः
समाप्तः ।